एकोऽपि सूरिर्धनराशिभर्त्ता यदाऽऽगमो राजगृहे शुभाय ।
पदप्रसादाज्जगतीं पुनाना वन्ध्या न किं सूरिपरम्परा सा ? ॥ २७ ॥
सरस्वती सन्निहिता हिताय जडेऽपि पद्माऽभ्युदयेन भूयात् ।
आनन्दनीया कविना विनोदैर्या राजहंसैः सरसोह्यतेऽर्थे ॥ २८ ॥
ये संयता अप्यपरस्य बन्धं विनाशनं वा जनयन्त्यवश्यम् ।
दूरेण हेया न मुमुक्षुणा किं ते शृङ्खलाऽभासि खलाः फलार्थे ॥ २९ ॥
असङ्ख्यकूटैः स्थपुटाः प्रपातस्थानानि भीमा विलसन्महेभ्यः ।
सदोच्चगोत्रा अपि मेखलाऽङ्का हिताय तेषां भुवि पक्षपातः ॥ ३० ॥
युक्तोऽतिजिह्मैर्विटपैरगम्यः प्रवृत्तिहेतुर्बहुनिम्नगानाम् ।
गोत्राधरोऽध्यायतमेखलो यस्तस्मिन् वरत्राशिखराधिरोहः ॥ ३१ ॥

[ पाठान्तरम् ]

जगज्जुगुप्सुः समितिप्रयोगी सदाप्यसाधुर्मलहृद् विरागः ।
स्फुरद्गुणग्रामकथासु मौनी निर्बन्धभेदं न विवेद किं सः ॥ ३२ ॥

---

[ २७ ] १ 'सूरिः गुरुः । २ 'धनराशिभर्त्ता' धनसमूहं पुष्णाति । ३ 'यदाऽऽगमः' यस्य सूरेरागमः सिद्धान्तः । ४ 'राजगृहे' राजगृहनामनगरे । ५ 'शुभाय' [ कल्याणाय ] अभूदिति शेषः । पक्षे–'यदाऽऽगमः' यस्य गुरोः आगमनम् । 'राजगृहे' चन्द्रगृहे कर्कराशौ उच्चस्थानत्वात् । ६ 'पदप्रसादाद्' पदानि वाचकादीनि प्रदानात् ।

[ २८ ] ७ 'सरस्वती' सरस्वती देवी । ८ 'सन्निहिता' योजिता । ९ 'जडे' मादृशे मूर्खे । १० 'पद्माऽभ्युदयेन' लक्ष्मीवर्धनेन । ११ 'आनन्दनीया' वर्द्धनीया । १२ 'कविना' पण्डितेन । १३ 'राजहंसैः' राजसु हंसैः श्रेष्ठैः । १४ 'अर्थे सरसा' इति ॥

[ पक्षे 'सरस्वती' वाणी । 'जडेऽपि' जडेऽपि । 'पद्मा' लक्ष्मीः शोभा इति यावत् । 'राजहंसैः' चन्द्रसूर्यैः । 'ऊह्यते' धार्यते । चन्द्रार्कमण्डले लिखितैव ॥ 'सरस्वती' नदी । 'जडे' जले [ 'डलयोरैक्यम्' इति नियमात् ] । 'कविना' ब्रह्मणा । देवीपक्षेऽपि राजहंसैः ऊह्यते विमृश्यते ]

[ २९ ] १५ 'संयता' अन्योऽन्यं बद्धा । १६ 'अपरस्य बन्धं जनयन्ति' १७ 'विनाशनम्' अशनं भोजनं विना ।

[ पक्षे 'संयताः संवरकुशलाः । 'अपरस्य बन्धम्' काव्यादिसंदर्भम् । 'विनाशनं जनयन्ति' विनाशं प्रापयन्ति ॥

[ ३० ] १८ 'कुटैः' कूटानि शिखराणि छलानि वा । १९ 'स्थपुटाः' विषमोन्नताः । २० 'प्रपातस्थानानि' प्रपातोऽवटः स्खलितं वा तदास्पदम् । २१ 'भीमाः' रुद्राः । २२ 'विलसन्महेभ्यः' बिल, सद्, महा, इभ्य, इति पदविभागः [ बवयोरैक्यमिति ] बिले सीदन्तीति बिलसदः सर्पाः महामहिषास्तेभ्योऽपि । २३ 'सदोच्चगोत्रा' विशिष्टवंशा अपि । २४ 'मेखलाऽङ्काः' मे, खल, अङ्का, इति पदविभागः । 'मे' मम, 'खलाङ्काः' खलवत्, अङ्कश्चिह्नं लक्षणं येषां ते ॥

[ ३१ ] २५ 'अतिजिह्मैः' अतिवक्रैः । २६ 'विटपैः' विटपाः शाखाः दुर्जनाश्च तैः । २७ 'प्रवृत्ति॰' शिक्षाकरः । २८ 'निम्नगानाम्' असन्मार्गगानां पुंसाम् । २९ 'गोत्राधरः' भूधरो गोत्रेण हीनो वा । ३० 'अध्यायतमेखलः' अधिकं आयता मेखला यत्र । अधि, आयतमे, खलः, इति पदविभागे प्रकृष्टः अध्यायः अध्यायतमस्तत्र खलः दूषकः । ३१ 'तस्मिन् वरत्राशिखराधिरोहः' तस्मिन् वरत्रया रज्जुकया शिखरेऽधिरोहः । वर, त्रासि, खरे, ऽधिरोहः, इति पदविभागे त्रासोऽस्मिन्नस्तीति त्रासी [ त्रासयतीति त्रासी इहृक् ] खरेऽधिरोहो वरम् ॥

[ ३२ ] ३२ 'जगज्जुगुप्सुः' संसारनिन्दकः संसाररक्षको वा । ३३ 'समितिप्रयोगी' समितय इर्याद्याः समितिः कलहः [ समितिप्रयोगी रणतत्परः ] ३४ 'सदाप्यसाधुः' सतामाप्यः सेव्यः [ प्राप्योऽभिगम्य इति यावत्; साधुः सज्जनः ] ३५ 'मलहृत्' मलं पापं हरति पक्षे मलो देवादिपूजायामश्रद्धस्तद्धृत् हृदयं यस्य सः; पक्षे पापहृत् ] ३६ 'गुणग्रामकथासु' गुणभाजनरूपास्वपि ग्रामकथासु । पक्षे गुणसमूहवार्तासु । ३७ 'मौनी' अभाषकः देशकथानिषेधात् । ३८ 'निबन्धभेदः' निबन्धः कर्मबन्धस्तस्य प्रकारं पक्षे काव्यादिदोषम् । ३९ 'विवेद' वेत्ति ।

---

[ 30 ] 1 'अविलसद् महेभ्यः' महेभ्यः महाऽऽढ्यः लक्ष्मीवान् अविलसद् विलासं करोति स्म । 2 '॰गोत्राः' पर्वताः । 3 'मेखला' कटिसूत्रं पर्वतस्य मध्यभागो वा । 4 'पक्षपातः' पक्षे पातः पक्षाणां वा पातः नाश इति यावत् ।

[ 31 ] 5 'निम्नगानाम्' सरिताम् 'स्रोतस्विनी धुनी सिन्धुः स्रवन्ती निम्नगाऽऽपगा' इति [ धनञ्जयः श्लो॰ २४ ]

[ 32 ] 6 '॰अधरः' 'अथाधरः हीनवादिनि' इति [ है॰ कां २ श्लो॰ ११ ]

प्रयान्ति ये प्रेम जनेष्वपूर्वं वैधेयराजोऽपि विना निमित्तम् ।
परस्य वैकृत्यनिबद्धचित्तास्ते सज्जनाः सन्तु मयि प्रसन्नाः ॥ ३३ ॥
मुखे निबन्धस्य खलप्रवृत्तिं बुधाः सुधावन्न मुधाऽऽद्रियन्ते ।
स्रवेद् विनेतां विलसत्पदा गौरसौ रसौघं न यतोऽद्भुताऽपि ॥ ३४ ॥
स भासतामन्यगुणानुरागः सभा सतामुल्लसतीव यस्मात् ।
प्रमोदयं प्राप्य गवां रहस्ये प्रमोदयन्ती हृदयं कवीनाम् ॥ ३५ ॥
लभ्याः कवीनां सुकृतैः पुराणैः सभ्याः कृपापूर्णदृशं दिशन्तु ।
ययाऽब्जबन्धुप्रभयेव लोकोऽपदोषवृत्तिर्गिरिसानुरागः ॥ ३६ ॥
जगद्गुरूणामतिगौरवेणाभिनम्य सम्यक् चरणारविन्दम् ।
प्रारभ्यतेऽपूर्वधियाऽनुभाव्यं श्राव्यं मया 'दिग्विजयाख्यकाव्यम्' ॥ ३७ ॥
इहास्ति जम्बूपपदः प्रथीयान्, द्वीपोऽवनीपः सकलाश्रयाणाम् ।
प्रदीपरूपः स्वसमीपवृत्त्योरूर्द्ध्वस्थिताऽधः स्थितलोकयोर्यः ॥ ३८ ॥
स्वर्णाऽऽतपत्रप्रतिमं सुमेरुमुच्चैर्दधानः क्षितिभृत्प्रधानः ।
शीतातिशीतोदकयो रयाभ्यां कृतोत्तरासङ्ग इवैष रेजे ॥ ३९ ॥

---

[ ३३ ] १ 'अपूर्वं प्रेम' अप्रेमो द्वेष इत्यर्थः ।
२ 'वैधेयराजोऽपि' मूर्खवरा अपि पक्षे विधेय एव वैधेयो विनयी तद्राजोऽपि । विनयकराः सन्तः । ३ 'विना निमित्तम्' निष्कारणं स्वार्थं विना पक्षे निरर्थकम् ।
४ 'परस्य वैकृत्यनिबद्धचित्ताः' परदूषणलग्नमनसः पक्षे वै निश्चितं परस्य कार्यानुरागिमनसः ।

[ ३४ ] ५ 'गौः' वाणी सुरभिश्च ।
[ ३५ ] ६ 'सभा सतामुल्लसतीव' सतां सभा उल्लसतीव ।
७ 'प्रमोदयम्' ज्ञानोदयम् ।
[ ३६ ] ८ 'अपदोषवृत्तिः' अपगता दोषवृत्तिर्यस्मात् सः ।
९ 'गिरिसानुरागः' इति समस्तपदे पर्वतेषु सानूनां शिखराणां रागो लोहितिमा ।

---

[ 33 ] 1 'वैधेय°' वैधेयो मूर्खः 'वैधेयो मातृशासितः' इति [ है० कां० ३ श्लो० १६ ] 'वैधेय ' विनयस्थः 'विधेये विनयस्थः स्यात्' इति [ है० कां० ३ श्लो० ९६ ]
[ 34 ] 2 'मुखे' प्रारम्भे । 3 'निबन्धस्य' ग्रन्थस्य । 4 'खलप्रवृत्तिम्' दुर्जनप्रवृत्तिम् ।
5 'बुधाः' पण्डिताः कवयः ग्रन्थकर्तार इति यावत् ।
6 'आद्रियन्ते' गृह्णन्ति । 7 'विलसत्पदा' विलसन्ति पदानि पादा वा यस्यां सा । 8 'रसौघम् शृङ्गारवीरादिरसानां ओघः प्रवाहः ।
[ 35 ] 9 'भासताम्' दीप्यताम् 'भासि' दीप्तौ इति धातोः पञ्चम्याः रूपम् । 10 'अन्यगुणानुरागः' अन्येषां गुणानामनुरागः प्रीतिः । 11 'गवाम्' वाणीनाम् । 12 'प्रमोदयन्ती' आनन्दयन्ती प्रमोदं कुर्वन्ती ।
[ 36 ] 13 'कृपापूर्णदृशम्' कृपया प्रसादेन पूर्णाश्च ते दृशस्तम् । अथवा कृपाविजयः इति स्वगुरोर्नाम स्मृतम् । 14 'अब्जबन्धुप्रभया' सूर्यकान्त्या । अथवा चरित्रनायकस्य 'प्रभ' इत्यनेन श्रीप्रभसूरेः स्मरणम् । 15 गिरि सानुराग इति पदविभागे 'गिरि' वाण्याम् । 16 'सानुरागः' अनुरागेन प्रीत्या सह वर्तमान इति ।

[ 37 ] 17 'जगद्गुरूणाम्' जगतो गुरवस्तेषाम् । अत्र 'जगद्गुरु' इत्यनेन हीरविजयसूरेः स्मरणं संभाव्यते तस्य तथाविधबिरुदत्वात् ।
18 'अपूर्वधिया' अपूर्वबुद्ध्या अथवा 'पूर्वधिया' इति पदत्वे पूर्वेषां बुद्ध्या यथा पूर्वैः कथितं तथैव ।
19 'अनुभाव्य' स्वयमनुभूयमानं चरित्रविषयं स्वं प्रयुज्येति ।
20 'श्राव्यम्' श्रोतुं श्रावयितुं वा योग्यम् ।
[ 38 ] 21 'जम्बूपपदः' उप समीपे पूर्वं वा पदस्येत्युपपदं जम्बू उपपदं यस्य सः । जम्बूतरुप्रधानत्वाज्जम्बूद्वीपः ।
22 'प्रथीयान्' विस्तृतः । '°योजनशतसहस्रविष्कम्भो जम्बूद्वीपः' इति [ तत्त्वार्थः ३–९ ] 23 'अवनीपः' अवनीं पृथ्वीं पाति रक्षतीत्यवनीपः राजा ।
[ 39 ] 24 'स्वर्णातपत्रप्रतिमम्' सुवर्णस्य छत्रतुल्यम् । 25 'क्षितिभृत्प्रधानः' पर्वतेषु श्रेष्ठः । 26 'शीतातिशीतोदकयोः' शीतलातिशीतलजलयुक्तयोः 'शीता' 'अतिशीता' इति नाम्न्यौ नद्यौ । 27 'रयाभ्याम्' वेगाभ्याम् । 28 'उत्तरासङ्गः' प्रावारः "वैकक्षे प्रावारोत्तरासङ्गौ बृहतिकाऽपि च" इति [है० कां० ३ श्लो० ३३६]

[1]रत्नप्रभायाः प्रथमांशरूपे सिंहासनेऽयत्ननिबद्धरत्ने ।
यस्तस्थिवान् दिग्वरकन्यकाभिर्व्याधूयमानानिलचामरश्रीः ॥ ४० ॥
वेलाऽबलास्तुङ्गतरङ्गहस्तैः पयोनिधेर्यं समवाकिरन्ति ।
[2]समीरनुन्ना मणिमौक्तिकानां [3]व्रजेन [4]वर्द्धापनयोजितेन ॥ ४१ ॥
यः स्वैर्मणीभिर्[5]नगराजजन्यैर्नदीमहावेगलघुप्रयुक्तैः ।
[6]रत्नाकरत्वं जलधेर्विधत्ते [7]समानयोर्न्याय्यतमौचितीयम् ॥ ४२ ॥
किं स्वर्निवासः स्फुटतामुपैति तारावतारान्निशि भीतभीतः ।
क्वचित् प्रभाते प्रपलाय्य याति स्थानेऽधिपः [8]कौशिक एव तस्य ॥ ४३ ॥
स्वर्गेऽपि सम्भाव्य भियाऽसुराणां चलाचलत्वं तदिदं सुराणाम् ।
[9]पुरी सुमेरोः शिखरेऽध्युवास द्वीपाधिराजः शरणं प्रपद्य ॥ ४४ ॥
एकैव [10]सिन्धुर्[11]वनमेकमेव [12]सरोऽपि चैकं दिवि वेद्यते [13]ज्ञैः ।
द्वीपे सहस्रप्रमितास्[14]तटिन्यः कोटिः प्रमाणं सरसां वनानाम् ॥ ४५ ॥
मन्यामहे द्वीपवरे ह्यमुष्मिन् [15]महौषधीमृत्पयसां विशेषम् ।
इन्द्राभिषेके तत एव तेषामादित्सयाऽऽयान्ति सुरा धरायाम् ॥ ४६ ॥
रसो न तादृक् दिवि देवभोज्ये [16]सुधान्धसो द्वीपमुपेत्य तस्मात् ।
[17]जोहूयमानं हविरास्वदन्ते जाज्वल्यमाने [18]ज्वलने प्रविश्य ॥ ४७ ॥
तावद् विमानस्थललक्षपूर्णस्वर्गस्य लक्ष्मीविजयस्य चिह्नम् ।
द्वात्रिंशदेते [19]विजया विभान्ति द्वीपे जिनानां [20]जनुषाऽतिपूताः ॥ ४८ ॥
यत्[21]प्राभृतं काञ्चनभूमिभागे तारावतारात् त्रिदिवं करोति ।
मुक्तामयेऽराजत कुम्भशोभा तत्रेन्दुबिम्बप्रतिबिम्बनेन ॥ ४९ ॥
दिवा विभूतिर्बहुधैव यस्य द्वीपाधिराजः प्रतिभाति रत्नैः ।
[22]तत्संवरे [23]रात्रिचरोडुरत्नैः स्वर्गस्य शोभाऽ[24]भिनिवेशलेशः ॥ ५० ॥

---

[ 40 ] 1 'रत्नप्रभायाः' 'रत्नप्रभा' इति प्रथमनरकस्थितपृथिव्या नाम तस्याः । "अथ रत्नप्रभा घर्मा" इति हैमः [ अभि० चिं० कां० ५ श्लो० ३ स्थितशेषे श्लो० १ ] ।

[ 41 ] 2 'समीरनुन्नाः' पवनेन क्षिप्ताः । 3 'व्रजेन' समूहेन । 4 'वर्द्धापन॰' वधामणी इति भाषायाम् ।

[ 42 ] 5 'नगराजजन्यैः' पर्वतराजोत्पन्नैः । 6 '॰रत्नाऽऽकरत्वम्' रत्नानामाकरस्तस्य भावः । 7 'समानयोः' नदीपर्वतयोः ।

[ 43 ] 8 'कौशिकः' इन्द्रः 'कौशिकः पूर्वदिग्देवाऽप्सरःस्वर्गेशचीपतिः' इति हैमः [ अभि० चिं० कां० २ श्लो० ८७ ] ।

[ 44 ] 9 'पुरी' अमरावती [अभि० चिं० कां० २ श्लो० ९२]

[ 45 ] 10 'सिन्धुः' स्वर्गङ्गा । 11 'वनम्' नन्दनम् [ अभि० चिं० कां० २ श्लो० ९२ ] 12 'सरः' नन्दीसरः [ अभि० चिं० कां० २ श्लो० ९२ ] 13 'ज्ञैः' बुधैः । 14 'तटिन्यः' नद्यः ।

[ 46 ] 15 'महौषधीमृत्पयसाम्' महती चासौ औषधी च महौषधी मृच्च पयश्च इति ।

[ 47 ] 16 'सुधान्धसः' सुधाऽमृतमन्धोऽन्नं भोज्यं येषां ते देवाः 'अन्धः पीयूषममृतं सुधा' इति हैमः [ अभि० चिं० कां० २ श्लो० ३ ] ।

17 'जोहूयमानम्' अतिशयेन हूयमानम् 'हुंक्' दानादनयोः [ दानमत्र हविष्प्रक्षेपः, अदनं भक्षणम् ] इति धातोः यङि कृते आनश् प्रत्ययस्य रूपम् । 18 'ज्वलने' अग्नौ ।

[ 48 ] 19 'विजयाः' महाविदेहस्थितद्वात्रिंशद्विजयाः ।

20 'जनुषा' जन्मना [ अद्यापि विंशतिविहरमानजिनानां विदेहे जन्मसम्भवात् ] ।

[ 49 ] 21 '॰प्राभृतम्' ढौकनम् ।

[ 50 ] 22 'तत्संवरे' तत्पिधाने ।

23 'रात्रिचरोडुरत्नैः' रात्रिचरश्चन्द्रः, उडूनि ताराश्चेति रात्रिचरोडूनि एव रत्नानि तैः ।

24 'अभिनिवेशलेशः' ईषद् निर्बन्धः 'निर्बन्धोऽभिनिवेशः स्यात्' इति हैमः [ अभि० चिं० कां० ६ श्लो० १३६ ] ।

यद्भूषणानां मणिमौक्तिकानां रात्रौ वियद्दर्पणबिम्बितानि ।
उत्पश्यतो नश्यति रूपगर्वः स्वर्गप्रदेशस्य तदैव सर्वः ॥ ५१ ॥
[1]कवि[2]र्बुधो वा [3]गुरुरेक एव स्वर्गे [4]हरेर्मानसरञ्जनाय ।
समुद्भवन्त्यत्र सहस्रशस्ते कस्तेन [5]नाकस्य [6]तुलाविमर्शः ॥ ५२ ॥
द्वीपेन सार्धं तुलने गुणौघैर्यद्द्युलोके लघुता बभूव ।
तेनायमुच्चैः स्थिरतामवाप निदर्शयन् स्वं त्रपया निशीव ॥ ५३ ॥
अत्याकुलो [7]भोगिकुलेन [8]नागलोको द्विजिह्वाऽऽश्रयदोषबुद्ध्या ।
अधःकृतोऽतः परितापयोगाद् विषोपशान्त्यै पवमानमत्ति ॥ ५४ ॥
[१]न-वस्तुतः कश्च [२]न-भोगभावाद[३]मुष्य लक्ष्मया[४]स्त्रिदिवे[५]ऽतिरेकः ।
[६]नक्षत्रलोकस्पृशि सम्भृतस्य जनेन [७]सत्सङ्गरसङ्गतेन ॥ ५५ ॥
[८]श्रीनन्दनोऽ[9]प्यङ्गविभासरङ्गः [10]कृष्णो न यस्मिन् ननु जिष्णुलोकः ।
न [11]रुद्रता कापि महेश्वरेषु द्वीपोऽतिशेते स्वगुणैः स्वरेवम् ॥ ५६ ॥
वनेऽपि [12]रम्भाः शतशोऽधिपात्रं नृणां सुखायाऽ[९]प्सरसां प्रसङ्गे ।
[१०]ना[13]सत्यरूपा जनता समाऽस्मिन् द्वीपः कथं स्वर्गजयाय नालम् ॥ ५७ ॥
[14]द्विजाधिराजेऽपि कलङ्कपङ्कः [15]सूरेऽपि यत्र [16]ग्रहणप्रसङ्गः ।
भोक्ता [17]पुराणः पुरुषो [18]रमायाः स्ववासस्सौख्यं त्वियतैव गम्यम् ॥ ५८ ॥
[19]कलाविलासः सततं [20]द्विजेशे [21]सूरेऽत्र [22]निर्दोषसुवृत्तभावः ।
लक्ष्म्या नु रागः पुरुषोत्तमानां द्वीपस्य न स्वर्विषयः [23]प्रतीपः ॥ ५९ ॥
[24]राजाऽपि कन्यां परिभोक्तुमीष्टे [25]गुरोः कवेः काऽत्र नये जुगुप्सा ।
[26]प्रभाकरो मीनमजं च भुङ्क्ते स्ववासिनां धर्मकथान्यथाऽसौ ॥ ६० ॥

[ ५५ ] १ 'न वस्तुतः' नव । स्तुतः इति पदविभागे नवीनस्तुतः वर्णितः । २ 'कश्चन भोगभावात्' कश्च । नभोगभावात् । इति पदविभागे देवसद्भावात् । ३ 'अमुष्य' जम्बूद्वीपस्य । [ 'कश्च । न । भोगभावात्' इति पदविभागे कश्च न अस्ति । पक्षे अमुष्य द्वीपस्य भोगभावात् अतिशयः कश्चन वस्तुतः स्वर्गेऽपि नास्ति ] ४ 'त्रिदिवे' स्वर्गे । ५ 'अतिरेकः' अतिशयः । ६ 'नक्षत्रलोकस्पृशि' दिवि । ७ 'सत्सङ्गरसङ्गतेन' सतां सङ्गस्य यो रसस्तं प्राप्तेन; अथवा सन् यः सङ्गरो न्यायरणस्तत्र सङ्गतो मिलितस्तेन ॥

[ ५६ ] ८ 'श्रीनन्दनः' व्यवहारी पक्षे स्मरः ।

[ ५७ ] ९ 'अप्सरसाम्' अब्युक्तानि सरांसि तेषाम् । १० 'नासत्यरूपा' नासत्यावश्विनीकुमारौ तद्वद् रूपं यस्याः सा ।

[ 52 ] 1 'कविः' शुक्रः । 2 'बुधः' सौम्यः । 3 'गुरुः' बृहस्पतिः । 4 'हरेः' इन्द्रस्य । 5 'नाकस्य' स्वर्गस्य । 6 'तुलाविमर्शः' तुलनाविचारः ।

[ 54 ] 7 'भोगिकुलेन' सर्पकुलेन । 8 'नागलोकः' नागकुमारदेवतागणः ।

[ 56 ] [ स्वर्गे स्मरस्यानङ्गत्वम् कृष्णस्य कृष्णत्वम्; रुद्रस्य महादेवस्य रुद्रता अस्ति ] परमत्र द्वीपे [ परिहारस्वरूपे ] 9 'अङ्गविभासरङ्गः' व्यवहारी लोकः 10 'जिष्णुलोकः' विजयिलोकः कृष्णो न । 11 महेश्वरेषु महाऽऽढ्येषु रुद्रता न । तस्मात् द्वीपः स्वगुणैः स्वरं स्वर्गमतिशेते ।

[ 57 ] 12 'रम्भाः' कदल्यः अप्सरसश्च । 13 'नासत्यरूपा' स्ववैद्यरूपा; असत्यरूपा न ।

[ 58 ] 14 'द्विज॰' द्विजः चन्द्रमाः । 15 'सूरे' सूर्ये । 16 'ग्रहणप्रसङ्गः' राहोः ग्रसनप्रसङ्गः । 17 'पुराणः पुरुषः' ब्रह्मा । 18 'रमायाः' लक्ष्म्याः स्वपुत्र्या भोक्तेति प्रसिद्धिः ।

[ 59 ] 19 'कलाविलासः' चतुःषष्टिकलानां विलासः वैभवः । 20 'द्विजेशे' ब्राह्मणश्रेष्ठे । 21 'सूरे' सूर्ये, 'शूरे' वीरे । 22 'निर्दोषसुवृत्तभावः' निर्गतः दोषः यस्मात् स निर्दोषः । सुवृत्तः सुष्ठु वृत्तं चरित्रं यस्य सः सुवृत्तः । निर्दोषश्च सुवृत्तश्च निर्दोषसुवृत्तयोः भावः । 23 'प्रतीपः' प्रतिकूलम् ।

[ 60 ] 24 'राजा' चन्द्रस्तस्य कन्याराशेर्परिभोगत्वात् । 25 'गुरोः' बृहस्पतेः । 26 'प्रभाकरः' सूर्यः ।

क्षमाधराणां गुरुतां प्रपन्नो जनः प्रवृत्तिं भजते सुशीलाम् ।
कलाधरोऽधःकुरुते भवाङ्गं द्वीपे ह्यसौ धार्मिकताऽसधर्मा ॥ ६१ ॥
पराक्रमाऽऽक्रान्तदिगन्तरालौ द्वीपस्य बाहू इव तौ विशालौ ।
शैलाधिराजौ निषधोऽथ नीलः पूर्वापरायामधरौ धरायाम् ॥ ६२ ॥
तन्मध्यगं भाति विदेहवर्षं विचित्ररूपैर्विजयैः सहर्षम् ।
द्वीपश्रियाऽमण्डि दुरोदराङ्कस्तद्व्याजतस्त्वर्द्धितयीजयाय ॥ ६३ ॥
नीलाद्रिणाऽमा निषधाचलेनाऽन्योऽन्यं युयुत्सावशतो व्यताथि ।
स्वं स्वं भुजद्वन्द्वमिवैतदन्ताश्चकासिरे ते किल हस्तिदन्ताः ॥ ६४ ॥
माध्यस्थ्यमास्थाय किमन्तरेऽस्थाद् नगाधिराजोऽतिमहान् सुमेरुः ।
नमेरुरूपैः कलितोऽपि चित्रं महात्मनां स्यादयमेव भावः ॥ ६५ ॥
अपारिजातोऽपि सपारिजातस्त्रैलोक्यलक्ष्म्या इव नाभिभूतः ।
युक्तो वनैरप्यवनः सुराणां रराज राजेव स शैलराजः ॥ ६६ ॥
राशिर्मणीनां रमणीयभावं नीतः सुरैः क्रीडनहेतवे किम् ।
गर्तीभवँस्तेन जलैरपूरि स भूरिभिर्वारिनिधिप्रतीत्या ॥ ६७ ॥

क्वचित् स्फटिकसानुभिर्धवलभावमुद्भावयन्
क्वचिच्च बहुधातुभिर्बहलशोणिमानं वमन् ।
क्वचिन्मणिमरीचिभिर्धनुरथैन्द्रमुल्लासयन्
करोति सुरयोषितां मनसि मान्मथोद्दीपनम् ॥ ६८ ॥

---

[ ६१ ] १ 'भवाङ्गम्' क्रोधादिपक्षे ईश्वरदेहम् ।

[ ६६ ] २ 'अपारिजातोऽपि' [ अपारीणि बहूनि जातानि समूहाः प्रक्रमात् तरूणां तिरश्चां वा यत्र ] अपगतानि [ रलयोरैक्यत्वाद् ] आलिजातानि अनर्थसमूहा यत्र 'आलिः सख्यावली सेत्वनर्थेषु विशदाऽऽशये' इत्यनेकार्थः ।

३ 'अवनः' सुराणां तर्पणम् । 'प्रीगनेऽवनतर्पणे' इति हैमः [ अभि० चिं० कां० ६ श्लो० १३८ ]

---

[ 61 ] 1 'क्षमाधराणाम्' पर्वतानां तपस्विनां च । 2 'कलाधरः' चन्द्रः । 3 'अधःकुरुते' तिरस्कुरुते ।

[ 62 ] 4 'निषधः' 'नीलः' इत्याख्यौ पर्वतौ । 5 'पूर्वापरायाम्' पूर्वायां पश्चिमायां दिशि । 6 'अधरौ' ओष्ठौ ।

[ 63 ] 7 'विदेहवर्षम्' विदेहनामकं क्षेत्रम् । 8 'विजयैः' द्वात्रिंशद्विजयैः ।

9 'अमण्डि' अशोभि । 10 'दुरोदराङ्कः' द्युतस्य पाशकः । 'दुरोदरं कैतवं च द्युतमक्षवती पणः' इति हैमः [ अभि० चिं० कां० ३ श्लो० १५० ] ।

[ 64 ] 11–12 'नीलाद्रि'–'निषधाचल'–इति नामकौ पर्वतौ । 13 'युयुत्सा०' योद्धुमिच्छा युयुत्सा । 14 'व्यतायि' व्यस्तारि; 'तायृङ्' सन्तानपालनयोरिति धातोः "दीपजनबुध"–३–४–६७ इत्यनेन हैमसूत्रेण अद्यतन्यां कर्तरि ञिच् वा स्यात् । 15 'भुजद्वन्द्वम्' सुण्डाद्वन्द्वम् । 16 'चकासिरे' दिदीपिरे । 17 'हस्तिदन्ताः' हस्तिनो दन्ताः अनेन वलयाकृतित्वं द्वीपसमुद्राणामिति ज्ञेयम् ।

[ 65 ] 18 'नमेरुरूपैः' वृक्षविशेषस्वरूपैः ।

[ 67 ] 19 'गर्तीभवन्' अगर्तः गर्तः भवन्निति 'च्विप्रत्यये' गर्तीभवन् ।

[ 68 ] 20 'शोणिमानम्' लोहितम् । 21 'मणिमरीचिभिः' मणीनां मरीचयः किरणास्तैः । 22 'धनुरथैन्द्रम्' ऐन्द्रं इन्द्रसम्बन्धि धनुः । अथेत्यव्ययम् ।23 'सुरयोषिताम्' सुरललनानाम् । 24 'मान्मथोद्दीपनम्' मन्मथस्य स्मरस्य भावः मान्मथं तस्योद्दीपनम् ।

इतः शशिकरक्षरत्सलिलचान्द्र[1]सान्द्रच्छटा-
मिलद्घनघटापटुं सृजति नित्यवर्षाऽऽगमम् ।
इतो रविकरैस्तपत्तपनरत्न[2]जाताऽऽतपा-
न्निदाघसमयः[3] शमं नयति जाड्यमेणीदृशाम्[4] ॥ ६९ ॥

इतो विबुधसुन्दरी[5] व्रजति साऽभिलाषं दरीः[6]
प्रियेण सहसा हसन् मनसि मान्मथं बिभ्रती ।
इतोऽनवरतं[7] रतं[8] सपदि कर्तुकामः स्फुरन्
सुरः सुरसभाषितैर्[9]नयति सान्त्वनं कामिनीम्[10] ॥ ७० ॥

इतस्तपति चारणः[11] सकलजन्तुसाधारणः
शमी शमितपातकः क्षपितमोहदुर्घातकः ।
इतोऽर्चनमहोत्सवं रचयतीह देवोऽर्हतां
पटुर्बटुवधू[12]रितो नटति हावभावोद्भटम्[13] ॥ ७१ ॥

गुञ्जन्मञ्जुमृदङ्गजङ्गमरसाऽऽवेशात् समादेशतः
स्वर्नाथस्य सभासु भासुरमणीहारान्विता[14] स्वर्वधूः ।
नृत्यन्ती जनयत्यनन्यजमहो[15] यूनां मयूनां[16] हृदि
वैराग्यं शमिनामहो विषमता पात्रेतरप्राणिनाम्[17] ॥ ७२ ॥

उच्चैर्योजनलक्षसम्मिततनुः श्रीरत्नसानुर्[18]महान्
मूर्द्धन्यार्हतचैत्यनित्यविलसद्रत्नध्वजान्दोलनात् ।
जम्बूद्वीपमहीपतेर्मणिभुवां कोटीश्वरत्वं[19] जने
किं प्रख्यापयतीव पीवरतरस्वर्णांशुभिर्भास्वरः ॥ ७३ ॥

द्वीपः श्रीपतिनर्मकर्मभवनं[20] निर्दम्भसंरम्भभूः[21]
स्तम्भस्तस्य सुरेन्द्रशैलमिषतो[22] मध्ये बभावुच्छ्रितः ।
भित्तेः सा जगती प्रतीतिमदधाद् धौताम्बुधेर्वीचिभिः
सूर्याचन्द्रमसोर्द्वयी वितनुते दीपक्रियां सर्वतः ॥ ७४ ॥

---

[ 69 ] 1 '°चान्द्र°' चान्द्रं चन्द्रोपलः । 2 '°तपनरत्न°' तपनरत्नं सूर्योपलः । 3 'निदाघसमयः' ग्रीष्मकालः । 4 'एणीदृशाम्' मृगीदृशां मृगनयनानाम् ।

[ 70 ] 5 'विबुधसुन्दरी' देवललना । 6 'दरीः' गुहाः । 7 'अनवरतम्' सततम् । 8 'रतम्' सम्भोगः । 9 'सुरसभाषितैः' सुष्ठु रसो येषु भाषितेषु तैः । 10 'कामिनीम्' कामुकीम् ।

[ 71 ] 11 'चारणः' कुशीलवः, 'चारणस्तु कुशीलवः' इति हैमः [अभि० चिं० कां० २ श्लो० २४३]। 12 'बटुवधूः' माणवकप्रिया । 13 'हावभावोद्भटम्' हावश्च [ स्वचित्तवृत्तिं परत्र जुह्वतीं ददतीं हावयतीति हावो भ्रूतारकादीनां बहुर्विकारः ] भावश्च [ अन्तर्गतवासनात्मतया वर्तमानं रत्याख्यं भावं भावयतीति भावः, अङ्गस्याल्पो विकारः ] इति हावभावौ ताभ्यामुद्भटम् ।

[ 72 ] 14 'भासुरमणीहारान्विता' देदीप्यमानानां मणीनां हारास्तैर्युक्ता । 15 'महः' उत्सवः । 16 'मयूनाम्' किंनराणाम् 'किंनरस्तु किंपुरुषस्तुरङ्गवदनो मयुः' इति हैमः [ अभि० चिं० कां० २ श्लो० १०८ ]। 17 'पात्रेतरप्राणिनाम्' नाट्येऽधिकृतः पात्रं तस्माद्भिन्नानां जीवानाम् ।

[ 73 ] 18 'श्रीरत्नसानुः' लक्ष्मीयुक्तो मेरुः 'अथ मेरुः कर्णिकाचलः रत्नसानुः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ९७–९८ ]। 19 'कोटीश्वरत्वम्' कोट्याधीशत्वम्' ।

[ 74 ] 20 'श्रीपतिनर्मकर्मभवनम्' लक्ष्मीपतेः विष्णोर्वा केलिक्रियामन्दिरम् । 21 'निर्दम्भसंरम्भभूः' निर्दोषोद्यमस्य भूमी । 22 'सुरेन्द्रशैलमिषतः' मेरोर्व्याजतः ।

[1]महाहिमाद्रिर्ननु [2]रुक्मिनामा द्वीपे परौ द्वौ [3]सहजाविवा[4]गौ ।
दिशोरुदग्दक्षिणयोर्दिदृक्षोरन्त[5]र्जवन्याविव रत्नसानोः ॥ ७५ ॥
तदन्तराले [6]हरिवर्ष-रम्यक्क्षेत्रे पुनर्भोगभुवौ प्रतीते ।
[7]कल्पद्रुमाऽऽमोदमिषाद् यशोभिः स्वीयैर्द्युलोकश्रियमाश्रयन्त्यौ ॥ ७६ ॥
[8]लघुर्हिमाद्रिः [9]शिखरी द्वितीयोऽचलावमू तत्परतोऽतितुङ्गौ ।
वार्द्धिं तितीर्षू इव पाणिपादं विस्तार्य कार्यं कुरुतः [10]प्रमायाः ॥ ७७ ॥
[11]हैमन्त-हैरण्यकनामधेयं क्षेत्रद्वयी सौख्यमयीव भोगैः ।
यस्या नरैः प्राग्भवदानयोगाद् वश्याः क्रियन्ते त्रिदशा रसाऽऽढ्यैः ॥ ७८ ॥
तथोत्तरस्यां शिखरीन्द्रशैलादैरावतं वर्षमतर्षलोकम् ।
यन्नाम रागादिव किं समागात् स्वर्गस्थितिः [12]सूरकलाधराद्यैः ॥ ७९ ॥
वर्षाणि सप्तापि विभज्य शैलैर्निवेशयामास यथाऽर्हवृत्त्या ।
यः सप्तलोकप्रभुतां स्वकीयां प्रख्यापयन् सर्वजने समृद्ध्या ॥ ८० ॥
जम्बूवृक्षसमाश्रयन् निजकुले पत्रावलम्बीव यो
द्वीपाम्भोनिधिवेष्टितो निधिरिव स्वर्णाद्रिसान्द्रच्छविः ।
चक्रीवोत्तमदेवतोत्तरकुरुक्षेत्रद्वयाऽऽभोगवान्
संवासेन महोदयश्रियमयं द्वीपो ददात्यव्ययाम् ॥ ८१ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
जम्बूद्वीपवर्णनो नाम प्रथमः सर्गः ॥ १ ॥



[ ७५ ] १ "अन्तर्जवन्याविव रत्नसानोः" इत्यत्र मेरुश्च इति न ताभ्यां तद्व्यवधानमिति विचार्यं दूरस्थत्वात् । लघुनाऽपि वस्तुना दूरस्थमाच्छाद्यते ॥

[ 75 ] 1 'महाहिमाद्रिः' एतन्नामा पर्वतः । 2 'रुक्मिनामा' 'रुक्मि' इत्याख्यो गिरिः । 3 'सहजौ' भ्रातरौ । 4 'अगौ' पर्वतौ । 5 'जवन्यौ' यवनिके ।

[ 76 ] 6 'हरिवर्ष-रम्यक्'–एतन्नाम्नी क्षेत्रे । 7 'कल्पद्रुमाऽऽमोदमिषाद्' कल्पवृक्षस्य सुरभिव्याजतः ।

[ 77 ] 8 'लघुर्हिमाद्रिः' एतन्नामा पर्वतः । 9 'शिखरी' तन्नामकः पर्वतः । 10 'प्रमायाः' मानस्य ।

[ 78 ] 11 'हैमन्त-हैरण्यकनामधेयम्' 'हैमन्तश्च' 'हैरण्यकश्च' इत्येतयोर्नामधेयमभिधानम् ।

[ 79 ] 12 'सूरकलाधराद्यैः' सूर्याचन्द्रमसावादौ येषां तैः ।

## द्वितीयः सर्गः ।

अथास्त्यमुष्मिन् दिशि दक्षिणस्यां हिमाद्रितः श्रीभरताऽऽख्यवर्षम् ।
तच्चारुतां द्रष्टुमिवोडुनेत्रैर्[1]विभाति रात्रौ त्रिदिवं सतर्षम् ॥ १ ॥

सुवर्णमौलिर्[2]हिमवान् नगेन्द्रो यस्योत्तमाङ्गे[3] नृपचिह्नमाभात्[4] ।
रूप्याद्रिरस्याऽऽभरणं बभूव ग्रैवेयकं[5] रत्नमयूखपूर्णम्[6] ॥ २ ॥

†मुक्ताकलापश्रियमस्य[7] धत्ते स्वःसिन्धुसिन्धुद्वितयस्य[8] धारा ।
पयोधिरूपं दधतो दुकूलं[9] वेलाऽनुकूलं[10] नृपतेरिवात्र ॥ ३ ॥

वैताढ्यशृङ्गस्थितचैत्यमूर्द्धध्वजैर्[11]विजेत्रै[12] रजतप्रभाणाम्[13] ।
स्वर्गस्य शोभाजयजन्यमन्तस्तापं व्यपाकर्त्तुमिवोद्यतो[14] यः ॥ ४ ॥

काश्मीरजार्चिर्[1]निचयैर्[15]अजस्रं[16] धृताङ्गरागो[2]ऽद्भुतकौशलाऽऽढ्यः[3] ।
वहन् सजीवां[17] धनुराकृतिं[18] स राजेव रेजे भरतप्रदेशः ॥ ५ ॥

स्वर्गेऽन्धकारस्य विकारसत्ता स्वर्भाणुकार्ष्ण्यादनुमीयते ज्ञैः[19] ।
उच्चैः क्षिपन्नंशुभरं[20] मणीनां यः सौहृदात् तामिव[21] धिक् चिकीर्षुः[22] ॥ ६ ॥

सुरानुभावान्[23][4]मदवार्त्तयैव[24] स्वर्गोऽतिशेतां भरतप्रदेशात् ।
न तत्त्वतो यत्र चतुर्दशापि रत्नानि सिन्धोर्मथनाद् धृतानि ॥ ७ ॥

राजा[25] कलङ्की मघवाऽपि[26] गोत्रच्छेदी[27] तथाऽभूद्दृषिदारजारः[28] ।
प्रजापतिः[29] स्वां चकमेऽ[30]ङ्गजातां[31] स्वर्गेऽमुना किं समतानयेन[32] ॥ ८ ॥

---

[५] १ 'काश्मीर०' काश्मीरो देशः पक्षे काश्मीरजं कुङ्कुमम् । २ '°अङ्गरागः' अङ्गरागो विलेपनं पक्षे अङ्गो देशस्तस्य रागः । ३ 'कौशल°' कौशलं पाण्डित्यं पक्षे कौशलाऽयोध्या ॥

[७] ४ 'सुरा°' सुराः देवाः मदिरा च ।

---

[1] 1 'उडुनेत्रैः' उडूनि तारका एव नेत्राणि चक्षूंषीति ।

[2] 2 'सुवर्णमौलिः' सुवर्णे मौलौ शिखरे यस्य सः । 3 'उत्तमाङ्गे' मस्तके । 4 'नृपचिह्नम्' मुकुटम् । 5 'ग्रैवेयकम्' ग्रीवाप्रदेशनिविष्टं कण्ठभूषेत्यर्थः । 'ग्रैवेयकं कण्ठभूषा' इति हैमः [ अभि० चिं० कां० ३ श्लो० ३२१ ] । 6 'रत्नमयूखपूर्णम्' रत्नानां मयूखैः किरणैः पूर्णम् ॥

[3] † "प्रावारलीलामनुशीलतीव" इति वा पाठः मूलप्रतौ निर्दिष्टम् । 7 'मुक्ताकलापश्रियम्' मुक्तानां कलापः समूहस्तस्य श्रीः शोभा ताम् । 8 'स्वःसिन्धु०' स्वर्गङ्गा । 9 'दुकूलम्' क्षौमम् "क्षौमं दुकूलं दुगूलं स्याद्" इति हैमः [ अभि० चिं० कां० ३ श्लो० ३३३ ] । 10 'वेलानुकूलम्' समयानुकूलं समुद्राम्भसः वृद्धेरनुकूलं वा ।

[4] 11 'वैताढ्यशृङ्ग०' वैताढ्यो नाम पर्वतस्तस्य शृङ्गं शिखरम् । 12 'विजेत्रैः' विजयनशीलैः । 13 'रजतप्रभाणाम्' सुवर्णप्रभाणाम् । 14 'व्यपाकर्त्तुम्' दूरीकर्त्तुम् ।

[5] 15 'निचयैः' समूहैः । 16 'अजस्रम्' नित्यम् । 17 'सजीवाम्' जीवा ज्या तया युक्ताम् । "इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य यन्मूलं सा मण्डलक्षेत्रस्य जीवा भवति" । 18 'धनुः' इषुः । "ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्यं शेषार्धमिषुः भवति" ।

[6] 19 'ज्ञैः' पण्डितैः । 20 'अंशुभरम्' किरणसमूहम् । 21 'ताम्' अन्धकारस्य विकारसत्ताम् । 22 'चिकीर्षुः' कर्त्तुमिच्छुः 'कृ'धातोः सनन्तत्वाद् कृतो डुप्रत्ययः ।

[7] 23 'सुरानुभावात्' देवानां सुराया वा प्रभावात् । 24 'मदवार्त्तया' गर्वप्रवृत्त्या ।

[8] 25 'राजा' चन्द्रः । 26 'मघवा' इन्द्रः । 27 'गोत्रच्छेदी' गोत्रं पर्वतं छिनत्ति भिनत्तीति । 28 'ऋषिदारजारः' विश्वामित्रो मेनकायां जारतया कामुकत्वेन प्रवृत्त इति प्रसिद्धेः । 29 'प्रजापतिः' ब्रह्मा । 30 'चकमे' 'कमूङ् कान्तौ'—कान्तिरभिलाषस्तस्य परोक्षकालस्य रूपम् । 31 'अङ्गजाताम्' पुत्रीं लक्ष्मीम् । 32 'समतानयेन' साम्यनीत्या ।

स्वर्गस्य नाथा बलिनो महेन्द्रमुख्या जितास्तेऽपि पुराऽसुराद्यैः[1] ।
अमुष्य[2] राजा किल चक्रवर्ती सुरासुरैरप्यहतप्रभावः ॥ ९ ॥
गङ्गाप्रसङ्गाल्लभतां[3] कथञ्चित् स्वर्गोऽस्य साम्यं न तथाऽपि सम्यक् ।
सिन्धुप्रबन्धव्यतिरेकतस्तत् स्पर्द्धाऽर्द्धरूपैव[4] विवर्द्धनीया ॥ १० ॥
द्वात्रिंशदस्मिन् वरसन्निवेशा[5] देशाः सहस्राणि सुराऽऽलयाद् ये ।
लक्षा विमाना[6] अपि नाधिकत्वं योगान्नराणामुत ! किं नराणाम्[7] ॥ ११ ॥
न भूमिभागे भरतस्य रोगा भोगाश्च साऽऽभोगतया[8] रसाढ्याः ।
स्वर्गे नभोगा[9] वपुषोऽनुयोगात् सविक्रियास्तेऽनिमिषत्ववृत्त्या[10] ॥ १२ ॥
षड्भूमिदेशा[11] भरतप्रदेशे स्वर्गे पुनः द्वादशधा प्रयोगः ।
सत्पुण्यनैपुण्यवशान्न[12] जेयो द्वाभ्यामथै[13]कोऽपि च देशलेशः ॥ १३ ॥
ध्रुवस्थलं किञ्चन देवलोके तत्रापि मेरोः सविधानुभावः ।
सप्तैव तस्मिन् ऋषयोऽथ तेऽपि सारुन्धतीकाः[14] प्रगटव्यलीकाः[15] ॥ १४ ॥
तीर्थेश्वराश्चक्रभृतो बलाद्या[16] आर्यान्यकार्याय कृतावताराः ।
सहस्रशः सर्वबुधो[17] मुनीन्द्राः स्वर्गेऽस्य साम्यं न जडेन काम्यम् ॥ १५ ॥
नैकेन जेयो भरतप्रदेशः स्वर्गेण युग्मे च मिथोऽनुबद्धे[१] ।
मुख्ये तथान्त्ये विबुधाऽऽलयानां मध्ये तदेकत्वमभीतिभावात्[18] ॥ १६ ॥
द्वयोर्द्वयोस्ताविषयोश्च[19] सारमादाय धाता विदधेऽशषट्कम् ।
क्षेत्रस्य नूनं भरतस्य तस्मात् स्वःसङ्ख्यया षोडशता[20] न युक्ता ॥ १७ ॥

---

[१६] १ 'मिथोऽनुबद्धे युग्मे' मुख्ये युग्मेऽनुबद्धेऽन्त्ये युग्मेऽप्यनुबद्धे मध्ये, एक एकः स्वर्गः ।

---

[9] 1 'असुराद्यैः' तारकाद्यसुरैः । 2 'अमुष्य' भारतवर्षस्य ।

[10] 3 'गङ्गाप्रसङ्गात्' भरतप्रदेशे यथा गङ्गा वरीवर्ति तथैव स्वर्गेऽपि गङ्गा वर्तते । 4 'स्पर्द्धाऽर्धरूपैव' अर्धरूपैव सा स्पर्द्धा न पूर्णेत्यर्थः ।

[11] 5 'वरसन्निवेशाः' श्रेष्ठसंस्थानानि । 6 'विमानाः' वायुयाना विगतमाना वा सरलाश्चेत्यर्थः । 7 'किं नराणाम्' किन्नराणां कुत्सितपुरुषाणां वा ।

[12] 8 'साभोगतया' ज्ञानयुक्तया विस्तारेण सहितया वा । 9 'नभोगाः' देवाः, भोगाः नेत्यर्थोऽपि । 10 'अनिमिषत्ववृत्त्या' न निमिषति लोचनेऽनिमिषस्तस्य भावः ।

[13] 11 'षड्भूमिदेशाः'—"भरतवंशस्य योजनानां चतुर्दश सहस्राणि चत्वारि शतानि च षड्भागा विशेषोना ज्या वर्तते, तेन तस्य षट् भागाः वर्तन्ते" । 12 'सत्पुण्यनैपुण्यवशात्' सौख्यातिरेकान्न तत्पुण्यकौशलमधिगन्तुं शक्ताः । यथोक्तम्—"देवानां कृच्छ्रावाप्तविषयसुखलवाऽऽस्वादापहृतचेतसामनवाप्तगुरूदितश्रवणानां केषाञ्चिच्च कथञ्चिद्धितश्रवणसंभवेऽप्यवश्यभोगकर्माधीनत्वादकर्मभूमित्वाच्च विरत्यभावस्तेन भरतप्रदेशो न जेयः" । 13 'द्वाभ्याम्' द्वाभ्यां स्वर्गाभ्यामेको भागोऽपि न जेयः ।

[14] 14 'सारुन्धतीकाः' वशिष्ठपत्नी अरुन्धत्यासहिताः । 15 'प्रगटव्यलीकाः' व्यक्तदोषास्तेषां स्त्रीपरिग्रहत्वात् ।

[15] 16 'बलाद्याः' बलभद्रादयः । 17 'सर्वबुधः' सर्वं बोधन्तीति ।

[16] 18 'तदेकत्वमभीतिभावात्' भरतप्रदेशस्य वीरताऽऽदिगुणप्रकर्षेण तस्यैकत्वं भयाभावात् । स्वर्गश्च तावद् भयान्वितत्वेन मिथोऽनुबद्धः ।

[17] 19 'ताविषयोः' स्वर्गयोः । 20 'षोडशता' अत्र दिगम्बराणां प्रत्याक्षेपो यत् तैरभिमता स्वर्गाणां षोडशता न युक्ता । सा चेयम्—"सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयजयन्तापराजितेषु सर्वार्थसिद्धौ च" इति तत्त्वार्थराजवार्त्तिकम् [ अ० ४ सू० १९ ] ।

[1]सौधर्मरूपं [2]श्रमणाऽऽश्रमेषु आढ्यास्तथे[3]शानदशा रसाऽऽढ्याः ।
स्याद् [4]ब्रह्मभूयं [5]सुरतोपशान्ते [6]सदानत-प्राणतता [7]विनेये ॥ १८ ॥
[8]महेन्द्रलक्ष्मीर्[9]धरणीधवेषु [10]सनत्कुमाराः पवनाधिकाराः ।
चक्रे [11]सहस्रारविधिश्च [12]शुक्राधिकत्वमङ्गे [13]रसिकासुभाजाम् ॥ १९ ॥
ऐश्वर्यलक्ष्मी-धन-धर्म-कीर्त्ति-प्रज्ञा-प्रभा-वैभव-दर्शनेषु ।
परिस्फुरत्य[14]च्युतता प्रजानामस्मिँस्ततः किं दिवि[15] वस्तु [16]शिष्टम् ॥ २० ॥
त्रिभिर्विशेषकम् ॥

[17]खानिः सुखानां विषयोन्मुखानां सुलोचनौ[18]दारिकदेहवृत्त्या ।
न साधुलोकेऽथ सुखं न किञ्चिद् येनोपमेयो भरतप्रदेशः ॥ २१ ॥
एको गुरुः पाठयिता न नव्यं शास्त्रं कुतस्तद् दिवि बोधवृद्धिः ।
नाम्ना न तत्त्वाद् विबुधाः सुधाशा यल्ले[19]खशालाजुष एव नित्यम् ॥ २२ ॥
यस्मिन्ननेके गुरवो विवेके प्रत्याश्रमं सातिशया नयार्थम् ।
विधाय शास्त्राणि नवानि बालानध्यापयन्ति [20]भरतेऽतिदक्षाः ॥ २३ ॥
धनैर्न धर्मैर्न गुणैर्न बोधैः स्वर्गाधिकः स्याद् भरतात् ततोऽदः ।
शङ्के [21]शशाङ्कार्कमुखैः प्रकाश्यं वर्षान्महेन्द्रो भजतीव वर्षम् ॥ २४ ॥
तस्मिँस्तृ[22]तीयारकदेश्यकाले मुख्योऽर्हतां श्रीवृषभो बभूव ।
[23]धर्म्यस्थितीनां [24]जनजीविकानां कर्त्ताऽपहर्त्ता युगलस्थितीनाम् ॥ २५ ॥
कल्पद्रुमाणां परिणामसारैरभीष्टकारैस्समहोपकारैः ।
सम्भूय भूयः सुखसम्पदर्थं प्रादुष्कृतो दुष्कृतकृन्तनाय ॥ २६ ॥

---

[ 18 ] 1 'सौधर्मरूपम्' सुष्ठु धर्मस्तस्य भावः सौधर्मस्तस्य रूपम् । प्रथमदेवलोकश्च । 2 'श्रमणाऽऽश्रमेषु' साधूनां वसतिगृहेषु 3 'ईशानदशाः' इन्द्ररूपाः । द्वितीयदेवलोकश्च । 4 'ब्रह्मभूयम्' ब्रह्मणो भवनं ब्रह्मभूयं ब्राह्मणैकत्वं मोक्ष इत्यर्थः । पञ्चमदेवलोकश्च । 5 'सुरतोपशान्ते' संभोगोपरते सति । 6 सदानत-प्राणतता' सुष्ठुरीत्या-आनतता समन्तान्नमनक्रिया, प्राणतता प्रकर्षेणाऽऽनमनक्रिया च । नवम-दशमस्वर्गश्च । 7 'विनेये' शिष्ये ।

[ 19 ] 8 'महेन्द्रलक्ष्मीः' महाँश्चासाविन्द्रश्च महेन्द्रस्तस्य लक्ष्मीः ऋद्धिः । चतुर्थस्वर्गः । 9 'धरणीधवेषु' राजसु । 10 'सनत्कुमाराः' सनन्तो भक्तिमन्तः कुमाराः । सनत्कुमारचक्रवर्त्या-था वा । तृतीयदेवलोकश्च । 11 'सहस्रारविधिः' सहस्रप्रकारेण मङ्गलविधिः । अष्टमस्वर्गश्च । 12 'शुक्राधिकत्वम्' बलाधिकत्वम् । सप्तमस्वर्गः । 13 'रसिकासुभाजाम्' रसिकप्राणभृताम् ।

[ 20 ] 14 'अच्युतता' न च्यवत इत्यच्युतस्तस्य भावः । द्वादशदेवलोकश्च । 15 'दिवि' स्वर्गे । 16 'शिष्टम्' "एषु त्रिषु श्लोकेषु द्वादशदेवलोकानां केवलं नामरूपत्वमस्तीति निर्दिष्टं, न गुणभाक्त्वम् । देवलोकानां नामानुरूपं गुणत्वं तु भरतप्रदेशे एव दृश्यते तस्मात् तेषु स्वर्गेषु न किञ्चिद्वैशिष्ट्यं भरतप्रदेशात्" ।

[ 21 ] 17 'खानिः' आकरः । "स्यादाकरः खनिः खानिर्गञ्जा" इति हैमः [ अभि० चिं० कां० ४ श्लो० १०२ ] । 18 'औदारिकदेहवृत्त्या' औदारिकशरीरप्रकारेण । यथोक्तम्—"औदारिकम्—उदारं बृहदसारं यद् द्रव्यं तन्निर्वृतमौदारिकमसारस्थूलद्रव्यवर्गणासमारब्धमौदारिकप्रायोग्यपुद्गलग्रहणकारणपुद्गलविपाक्यौदारिकशरीरनामकर्मोदयनिष्पन्नम्" ।

[ 22 ] 19 'लेखशाला०' स्वर्गः कुमारकपाठस्थानञ्च ।

[ 23 ] 20 'भरते' क्रीडाविशेषे क्षेत्रे वाऽतिदक्षाः ।

[ 24 ] 21 'शशाङ्कार्कमुखैः' चन्द्र-सूर्यप्रमुखैः ।

[ 25 ] 22 'तृतीयाऽऽरक०' 'सुषमा' नामकमारकम् । "तिस्रः कोटिकोट्यः सागरोपमाणां सुषमा" । 23 'धर्म्यस्थितीनाम्' धर्मानुकूलरीतीनाम् । 24 'जनजीविकानाम्' मनुष्याणामाजीविका इति जनजीविकास्तेषाम् ।

कौमारके विंशतिलक्षपूर्वाण्यतीत्य जाते जनकौशलार्थे ।
राज्येऽभ्यषेचि [1]त्रिदशाधिपेन श्रीकौशलायां पुरि [2]पौरहर्षात् ॥ २७ ॥

त्रिषष्टिलक्षानतिगम्य राज्ये पूर्वाणि [3]लोकान्तिकदेववाचा ।
स्वयं प्रबुद्धोऽपि विशिष्य दीक्षां जिघृक्षुरासीद् बहुदानवर्षी ॥ २८ ॥

राज्यं परित्यज्य नृणां हिताय प्रव्रज्य [4]संवत्सरदानयुक्त्या ।
तपोऽपि सांवत्सरमेव तप्यन् [5]श्रेयांसतः पारणमप्यकार्षीत् ॥ २९ ॥

सहस्रवर्षाणि पुनस्तपांसि छद्मस्थभावे विविधानि तप्त्वा ।
कैवल्यकेलिं [6]कलयाञ्चकार [7]न्यग्रोधमूले स युगादिदेवः ॥ ३० ॥

[8]विशालसालत्रितयादिनीत्याऽस्याः स्थानभूमी रचिता सुरेन्द्रैः ।
[9]अध्यास्य [10]यामाद्यविभुर्विरेजे पूर्वाद्रिमूर्ध्नीव सहस्रभानुः ॥ ३१ ॥

तीर्थं व्यवस्थाप्य सभासदां स प्रबोधदानाय दिदेश धर्मम् ।
संसारवार्द्धौ निपतज्जनानामालम्बदायी स्वविलम्बनेन ॥ ३२ ॥

[11]व्याख्यातुरीशस्य [12]मुखामृतांशोर्ज्योत्स्नेव साक्षात् प्रकटीबभूव ।
प्रक्षालयन्ती जनमानसान्तस्तमः समग्रं [13]दशनाऽऽलिदीप्तिः ॥ ३३ ॥

ध्यानं मनोऽन्तःस्थितमस्य शुक्लं प्रवर्द्धमानं बहिरुज्जगार ।
रागं पराकर्त्तुमिवोष्ठभागे [14]निलीनमुच्चैर्[15]दशनांशुदम्भात् ॥ ३४ ॥

[16]पदाक्षरव्यक्ततयैव वाचां प्रचारणेऽस्य [17]द्विजराजकान्तिः ।
बभौ विभोरुज्ज्वलवाससा गौः[18] प्रादुर्भवन्तीव मुखारविन्दे ॥ ३५ ॥

[19]यन्मृष्टताऽभूद् वचसां जिनस्य द्वेधाऽपि [20]तापापनया त्रिलोक्याः ।
शङ्के ततो[21]ऽसौ वसुधाऽवतीर्णा [22]सुधाऽभिधावद् दशनांशुरूपा ॥ ३६ ॥

मांसे समांशे[23]ऽब्दसृजि प्रसक्ता दुग्धं परं मुग्धमपास्य कान्तिः ।
भदन्तदन्ताऽऽवलिरश्मिरूपात् तदा मदादेव विनिर्जगाम ॥ ३७ ॥

---

[ 27 ] 1 'त्रिदशाधिपेन' इन्द्रेण । 2 'पौरहर्षात्' नागरजनानामानन्दात् ।

[ 28 ] 3 "लोकान्तिदेववाचा' लोकान्तिकाः देवास्तेषां वाण्या लोकान्तिकदेवानां तथैवाऽऽचारत्वात् । यथोक्तम्—"लोकान्तिकदेवाः किल भक्तिप्रवणीकृतचेतसः सर्वदा जिनेन्द्रजन्मादिप्रलोकनपराः शुभाध्यवसायप्रायाः वरीवर्तन्ते" ।

[ 29 ] 4 'संवत्सरदानयुक्त्या' वार्षिकदानसहितया । 5 'श्रेयांसतः' श्रेयांसनामककाष्ठभारवाहिपुरुषात् क्षीरान्नमादाय पारणामकृत इति श्रुतिः ।

[ 30 ] 6 'कलयाञ्चकार' समधिगतवान् । 7 'न्यग्रोधमूले' वटवृक्षस्याधोभागे ।

[ 31 ] 8 'विशालसाल०' दीर्घप्राकाराः "समवसरणे देवाः रत्न-सुवर्ण-रूप्यमयं प्राकारत्रयं रचयन्ति" । 9 'अध्यास्य' उपविश्य । 10 'याम्' स्थानभूमिं समवसरणस्थितनिर्मलं स्फटिकमयं सिंहासनं तद्रूपाम् ।

[ 33 ] 11 'व्याख्यातुः' देशनादातुः । 12 'मुखामृतांशोः' मुखचन्द्रस्य । 13 'दशनाऽऽलिदीप्तिः' दन्तसमूहानां कान्तिः ।

[ 34 ] 14 'निलीनम्' प्रच्छन्नम् । 15 'दशनांशुदम्भात्' दन्तकिरणकपटात् ।

[ 35 ] 16 'पदाक्षरव्यक्ततयैव' पदानि-अक्षराणि च पदाक्षराणि तयोः व्यक्तता प्राकट्यं तेन । 17 'द्विजराजकान्तिः' चन्द्रदीप्तिः । 18 'गौः' वाणी ।

[ 36 ] 19 'यन्मृष्टता' यच्छुद्धता । 20 'तापापनया' संतापं कष्टं दूरीकरणेन । 21 'असौ' वाणीशुद्धता । 22 'सुधाऽभिधावत्' अमृतनामवत् ।

[ 37 ] 23 'अब्दसृजि' मेघसृजि ।

अङ्गानुषङ्गादिव जातरङ्गा गङ्गाऽप्यभङ्गा विलसत्तरङ्गा ।
[1]आप्लावयन्ती [2]निरियाय [3]भव्याँस्तदा [4]रदांशूपधिना जिनस्य ॥ ३८ ॥
सरस्वतीयं रदनच्छदांशुजेटा घटाया रुचिर[5]र्कपुत्री ।
[6]मन्दाकिनीह द्विजराजकान्तिव्याजाद् विरेजेऽत्र तत[7]स्त्रिवेणी ॥ ३९ ॥
यदुज्ज्वलत्वं दशनांशुजाले मुखारविन्दे रुरुचे विशाले ।
[8]प्रालेयरश्मेरपि विस्मयाय श्रियं जिगीषोर्दिनमात्रमेकम् ॥ ४० ॥
ववर्ष हर्षाद् दशनांशुनीरैः सोत्साहमर्हन् [8]जलवाह एषः ।
[9]रसेन तस्माज्जनमानसानि [10]प्रपूर्य [11]सन्तापम[12]पाचकार ॥ ४१ ॥
यः स्पर्द्धनोऽभून्महसा शशाङ्कः साङ्कस्तु पूर्णो दिनमात्रमेत्य ।
मुखाम्बुजं तज्जयमा[13]शशंस जैनं सदैव द्विजराजिदीप्त्या ॥ ४२ ॥
[14]द्विजाधिपः किं द्विजमात्रकान्त्या [15]विनिर्जितः [16]खं त्रपयोत्पपात ।
तदत्र जैनस्थितिरेव हेतुरहो ! महोत्साहदशाऽऽश्रयेण ॥ ४३ ॥
[17]दोषाकरो[18]ऽश्नन्नजमीनराशिमुद्योतते यद् द्विजनायकः खे ।
तत्कारणं श्रीजिनवक्त्रपद्मसेवा द्विजानां [19]प्रसृतांशुकानाम् ॥ ४४ ॥
[20]वाग्दिव्यसिन्धोः सहसा रसान्तर्नि[21]मज्ज्य सुस्नातचरी द्विजाऽऽली ।
[22]जलाञ्जलीनातनुते जपान्ते धारा [23]तदीयांशुमिषात् ससार ॥ ४५ ॥
[24]उत्फुल्लमल्लीवनसौरभाणि श्वासो जिनानां जयतीत्यभाणि ।
पुरातनैस्तद् द्विजकान्तिदम्भात् [25]कर्पूरपूरः पुरतो लुलोठ ॥ ४६ ॥
[26]ब्राह्मी* [27]जिनाऽऽस्याम्बुरुहप्रदेशाद् विनिर्गमे संभ्रमतो निपेतुः ।
मुक्तालताया इव मौक्तिकानि [28]व्याकीर्यमाणद्विजरश्मिदम्भात् ॥ ४७ ॥
[29]यदास्यदास्यं भजते [30]कलाभृत् तीर्थेशितुस्तद्रुचयस्तदीयाः ।
द्विजांशुदम्भादिव शश्वदेव स्फुरन्ति नूनं परितो मुखाब्जम् ॥ ४८ ॥

---

[ 38 ] 1 'आप्लावयन्ती' स्नापयन्ती । 2 'निरियाय' निर्जगाम । 3 'भव्यान्' मोक्षगमनयोग्यपुरुषान् । 4 'रदांशूपधिना' दन्तकिरणोपाधिना ।

[ 39 ] 5 'अर्कपुत्री' सूर्यपुत्री । 6 'मन्दाकिनी' गङ्गा । 7 'त्रिवेणी' गङ्गा ।

[ 40 ] 8 'प्रालेयरश्मेः' हिमरश्मेः चन्द्रस्येत्यर्थः ।

[ 41 ] 8 'जलवाहः' मेघः । 9 'रसेन' धर्मदेशनारूपवारिणा । 10 'प्रपूर्य' संभृत्य । 11 'सन्तापम्' कष्टम् । 12 'अपाचकार' दूरीकृतः ।

[ 42 ] 13 'आशशंस' कथयामास ।

[ 43 ] 14 'द्विजाधिपः' चन्द्रमाः । 15 'विनिर्जितः' पराजितः । 16 'खं त्रपयोत्पपात' स्वर्गं लज्जयोदडयत् ।

[ 44 ] 17 'दोषाकरः' चन्द्रमाः । 18 'अश्नन्' भक्षयन् । 19 'प्रसृतांशुकानाम्' विकसितकिरणानाम् ।

[ 45 ] 20 'वाग्दिव्यसिन्धोः' वाणीरूपदिव्यनद्याः । 21 'निमज्ज्य' ब्रुडित्वा । 22 'जलाञ्जलीनातनुते' जलेन संभृतान् अञ्जलीन् प्रकरोति । 23 'तदीयांशुमिषात्' प्रभोः वाणीकिरणव्याजात् ।

[ 46 ] 24 'उत्फुल्लमल्लीवनसौरभाणि' उत्फुल्लं विकसितं मल्ली विचकिलपुष्पविशेषस्तस्य वनमुद्यानं तस्य सौरभाणि सौगन्ध्यानि । "अब्ज [ मल्लिका ] गन्धः श्वासः तीर्थंकराणामतिशयविशेषः" । 25 'कर्पूरपूरः' घनसारसमूहः ।

[ 47 ] 26 'ब्राह्मी' वाणी । 27 'जिनाऽऽस्याम्बुरुहप्रदेशात्' जिनेश्वरस्य मुखकमलप्रदेशात् । 28 'व्याकीर्यमाणद्विजरश्मिदम्भात्' विक्षिप्ताश्चन्द्रकिरणास्तेषां व्याजात् ।

[ 48 ] 29 'यदास्यदास्यम्' यस्य प्रभोः मुखसेवकत्वम् । 30 'कलाभृत्' चन्द्रः ।

---

* ब्राह्मया ।

[1]वितीर्यमाणे किल [2]बोधिदाने जिनेन [3]तुर्याण्यभिनेदुरुच्चैः ।
तत्राभवत् किं [4]सुमनोऽभिवृष्टिः प्रसृत्वरैर्दन्तरुचां प्रचारैः ॥ ४९ ॥
जिनस्य [5]दिव्यध्वनिनो[6]ऽर्जितेन [7]ज्ञानार्णवः पूर्णतया जगर्ज ।
[8]पीयूषमा[9]विर्भवति स्म तस्माद् [10]द्विजन्मराजीरुचिकैतवेन ॥ ५० ॥
अस्पष्टवर्णत्वमु[11]शन्ति चान्ये जिनेन्द्रवाचस्तदिदं [12]विनेतुम् ।
वर्णा रदांशूज्ज्वलवर्णवेषमाधाय वक्त्राम्बुरुहान्निरीयुः ॥ ५१ ॥
[13]शब्दे गुणत्वं ह्यपरे दिशन्ति तदप्रमाणं द्विजकान्तिदम्भात् ।
[14]यन्निःसरन्नेव जिनस्य शब्दः [15]प्रोज्जृम्भतेऽत्युज्ज्वलवर्ण एव ॥ ५२ ॥
सुरासुराद्यान् [16]प्रतिबोधयन् स [17]क्ष्मापीठपावित्र्यविधित्सयैव ।
[18]मिथ्यामतध्वान्त[19]मपास्य सर्वं भास्वानिवोच्चैर्विजहार लोके ॥ ५३ ॥
विहृत्य चैकं किल पूर्वलक्षं धर्मं स्थिरीकृत्य सभासमक्षम् ।
कैलासशैलेऽनशनेन मोक्षं स प्राप्य भेजे तदनन्तसौख्यम् ॥ ५४ ॥
श्रीचक्रवर्ती भरताभिधानस्त[20]दङ्गजन्मा महसा प्रधानः ।
बभूविवान् दिग्विजयी [21]नयीशस्तदाख्यया वर्षमिदं सहर्षम् ॥ ५५ ॥
क्रमेण [22]तुर्याऽऽरकसंप्रवृत्तौ जज्ञे चतुर्विंशतिरर्हतां [23]सा ।
यस्याः स्मृतेर्ध्यानविधानतो वा जागर्त्ति लोकस्य महोदयश्रीः ॥ ५६ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
श्रीभरतवर्णनो नाम द्वितीयः सर्गः ॥



[49] 1 'वितीर्यमाणे' ददति । 2 'बोधिदाने' सम्यग्दर्शनप्रदाने । 3 'तुर्याणि' वाजित्राणि । "दुन्दुभिनाद उच्चैर्भुवनव्यापी स्यादिति तीर्थंकराणामतिशयविशेषः" । 4 'सुमनोऽभिवृष्टिः' पुष्पाणां वर्षा । "बहुवर्णपुष्पवृष्टिरपि तीर्थंकराणामतिशयविशेषः" ।

[50] 5 'दिव्यध्वनिनः' पञ्चत्रिंशद्वाचां गुणैर्युक्तस्य शब्दस्य । 6 'अर्जितेन' उत्पादितेन । 7 'ज्ञानार्णवः' ज्ञानसमुद्रः । "अनेन प्रभोः ज्ञानातिशयो व्यज्यते" । 8 'पीयूषम्' अमृतम् । 9 'आविर्भवति' उद्भवति । 10 'द्विजन्मराजीरुचिकैतवेन' दन्तसमूहकिरणव्याजेन ।

[51] 11 'उशन्ति' इच्छन्ति 'वशक् कान्तौ' इति धातोः वर्तमानकालस्य "वशेरयङि" ४–१–८३ इति सिद्धहेमसूत्रेण य्वृति रूपम् । 12 'विनेतुम्' देष्टुम् ।

[52] 13 'शब्दे गुणत्वम्' 'शब्दगुणकमाकाशम्' इति नैयायिका मन्वते । 14 'यन्निःसरन्' यस्मात् मुखान्निःसरन् बहिर्गच्छन् । 15 'प्रोज्जृम्भते' प्रकाशते ।

[53] 16 'प्रतिबोधयन्' उपदिशन् । 17 'क्ष्मापीठपावित्र्यविधित्सया' पृथ्वीतलस्य पवित्रतां विधातुमिच्छया । 18 'मिथ्यामतध्वान्तम्' मिथ्यादृष्टीनां मतरूपमन्धकारम् । 19 'अपास्य' निराकृत्य ।

[55] 20 'तदङ्गजन्मा' तस्य ऋषभदेवस्य पुत्रः । 21 'नयीशः' न्यायकर्तृणां स्वामी ।

[56] 22 'तुर्याऽऽरक-संप्रवृत्तौ' चतुर्थाऽऽरकाऽऽरम्भे । 23 'सा' महोदयश्रीः ।

## तृतीयः सर्गः ।

श्रीवर्द्धमानभगवान्[1]उदियाय साक्षाद् विश्वोपकारकरणे [१]करणे नियोगी[2] ।
[3]प्राच्यार्हतां [4]समुदितैर्मुदितैर्महोभिर्यो [5]जातरूप इव निर्जितजातरूपः[6] ॥ १ ॥
[7]उन्निद्रभक्तिभिरुपेन्द्रयुतैर्महेन्द्रैः सर्वैः [8]सुपर्वकृतपर्वणि [9]पर्वतेशे ।
क्षीराम्बुधेर्मधुरवारिभिरभ्यषेचि मेरौ जिनः [10]प्रसवजातमहोत्सवाहे ॥ २ ॥
[11]लोकेश-केशव-महेश-सुरेशमुख्यैः शिष्यैरिवाप्तविनयैरभिनूयमानः ।
[12]साचीकृताननशचीजनपीयमानस्तोत्रेण तेन विधिना भगवान् स रेजे ॥ ३ ॥
वादित्रचित्ररववैभवपूर्णलोकं [13]लोकम्पृणं तदनृणं [14]संघृणं जनानाम् ।
[15]दिष्ट्या दिनं सकलजन्तुहितं बभूव भूवल्लभस्य बहुदुर्लभपुत्रसूत्या ॥ ४ ॥
[16]सिद्धार्थपार्थिवकुलाम्बरभानुमाली [17]ज्ञातान्ववायजलधौ [18]कलधौतवर्ण्णः ।
[19]चन्द्रायते स्म महसामतिशायिवृत्त्या धुन्वन् द्विधापि रिपुचक्रमनुक्रमेण ॥ ५ ॥
क्रीडारसेन विलसन् विलसत्स्वरूपं [20]वैतालभावम्[21]अनुनीय सुरेण देवः ।
[22]संत्रासितोऽपि न मनाग् भयमाससाद तेनाभवद् विभवसम्भविवीरनामा ॥ ६ ॥
बाल्यं व्यतीत्य वयसा जयशालिरूपं बिभ्रन्[23]मनोभवनवस्मयहारि हारि ।
द्वेधापि [24]दारपरिकर्मपराङ्मुखोऽपि चक्रे [25]करग्रहमहं स्वजनानुवृत्त्या ॥ ७ ॥
मत्वा विषेण तुलितान् विषयानसारानाराद्पारभवदुःखपरम्परायाः ।
दीक्षां जिघृक्षुरपि मङ्क्षु सुरैर्न्यबोधि लोकान्तिकैर्जयजयारवमीरयद्भिः[26] ॥ ८ ॥
सांवत्सरं वितरणं तरणं भवाब्धेर्दत्वाऽऽददे वि[27]रमणं रमणं शिवान्तः ।
[28]त्यक्त्वाऽऽ[29]श्रवान् स भगवान् विजहार भूम्यां सम्यक् तृणे मणिगणे समतां दधानः ॥ ९ ॥

---

[ १ ] १ 'करणे' अधिकाराऽऽस्पदे ।

---

[ 1 ] 1 'उदियाय' आविर्बभूव । "प्रभोः वीरस्य जन्म विक्रमार्कात् पूर्वं चतुःशतसप्ततितमे [ ४७० ] वर्षेऽभूदिति विद्वज्जनसम्मतम् । 2 'नियोगी' कर्मसचिवः । "नियोगी कर्मसचिव आयुक्तो व्यापृतश्च सः" इति हैमः [ अभि० चिं० कां० ३ श्लो० ३८३ ] । 3 'प्राच्यार्हताम्' पूर्वतीर्थकृतां ऋषभादिपार्श्वपर्यन्तानाम् । 4 'समुदितैः' समुत्पन्नैः । 5 'जातरूपः' जातं रूपमस्य जातरूपमकृतस्वरूपं सुद्रीदेशजं सुवर्ण्णं वीरस्य सुवर्णवर्णत्वात् । 6 'निर्जितजातरूपः' पराजितः कामदेवो येन सः ।

[ 2 ] 7 'उन्निद्रभक्तिभिः' जागरूकसेवाभिः' । 8 'सुपर्वकृतपर्वणि' देवकृतपर्वणि । 9 'पर्वतेशे' श्रेष्ठपर्वते मेराविल्यर्थः । 10 'प्रसवजातमहोत्सवाहे' जन्मकृतमहोत्सवदिवसे ।

[ 3 ] 11 'लोकेश-केशव-महेश-सुरेशमुख्यैः' लोकेशः राजा, केशवः कृष्णः, महेशः महादेवः, सुरेशः इन्द्रः–तेषां मुख्यैः प्रधानैः । 12 'साचीकृतानन०' तिर्यक्कृतं मुखं येन । 'तिर्यगर्थे तिरः साचि" इति हैमः [ अभि० चिं० कां० ६ श्लो० १७० ] यथा–"साचि लोचनयुगं रमयन्ती" ।

[ 4 ] 13 'लोकम्पृणम्' लोकान् प्रीणाति, आनन्दयतीति तम् । 14 'सघृणम्' करुणायुक्तम् । 15 'दिष्ट्या' सम्मदेन । 'दिष्ट्या सम्मदे' इति हैमः [ अभि० चिं० कां० ६ श्लो० १६४ ]

[ 5 ] 16 'सिद्धार्थपार्थिव०' सिद्धार्थनामा नृपः वीरस्य पिता । 17 'ज्ञातान्ववायजलधौ' ज्ञातनामकवंशसमुद्रे 'वंशोऽन्वयोऽन्ववायः' इति धनञ्जयः [ श्लो० १२५ ] । 18 'कलधौतवर्ण्णः' सुवर्णवर्णः 'तपनीयं कलधौतम्' इति धनञ्जयः [ श्लो० १४ ] । 19 'चन्द्रायते' चन्द्रमिवाचरतीति ।

[ 6 ] 20 'वैतालभावम्' वैतालिकस्वरूपं उच्चैः तालवृक्षमिव स्वरूपं । 21 'अनुनीय' कृत्वा । 22 'संत्रासितः' भापयमानः ।

[ 7 ] 23 मनोभवनवस्मयहारि' कामदेवस्य नवीनो यः स्मयस्तं हरत इति । 24 'दारपरिकर्म०' पत्नीपरिग्रहः । 25 'करग्रहमहम्' विवाहोत्सवम् ।

[ 8 ] 26 'ईरयद्भिः' कुर्वद्भिः ।

[ 9 ] 27 'वितरणम्' दानम् । 28 'विरमणम्' हिंसादि-पञ्चकपायेभ्यः विरमणं विरतिः । 29 'आश्रवान्' आस्रवन्ति कर्माणि यैः द्विचत्वारिंशत्प्रकारैः तान् ।

सोढुं परीषहगणानुपसर्गवर्गैर[1]क्षोभ एव सहसा स [2]यथार्थनामा ।
तीव्रैस्तपोभिर[3]वधूतवधूविलासः कक्षीचकार किल केवलबोधलीलाम् ॥ १० ॥
देवध्वनिर्ध्वनितदिग्वलयः ससार व्योम्नस्तदा सुमनसो द्विविधाऽवतेरुः ।
[4]निर्दम्भदुन्दुभिरभिन्नरवो जगर्ज [5]सन्तर्जयन्निव विमोहमहोर्जितानि ॥ ११ ॥
रत्नैः सुवर्णनिवहै रजतैर्निसृष्टा [6]सालत्रयी भगवतः परितो बभासे ।
अस्याश्छलेन [7]वलयाकृतिशैलराजाः प्राप्तास्त्रयोऽपि जिनऋद्धिदिदृक्षयेव ॥ १२ ॥
[8]सिंहासनं समधिरुह्य जिनस्तदासांचक्रे मणीगणलसत्किरणैर्विचित्रम् ।
भास्वानिवोदयनगोन्नतशृङ्गसङ्गी सङ्गीतवाद्यगणमाद्यदमन्दशब्दैः ॥ १३ ॥
[9]छत्रत्रयी द्युतिमयी [10]प्रचयीकृतानां सान्द्रेन्द्रनीलमणिमौक्तिककाञ्चनानाम् ।
रेजे [11]जगत्त्रयनिविष्टपदार्थसार्थप्रोद्भासनाय वपुषस्त्रितयीव भानोः ॥ १४ ॥
[12]उच्चामरावलिविकीर्णसितप्रकीर्णकान्दोलनैरनिलमूर्च्छनतस्त्रिलोक्याः ।
बाह्यस्तथान्तरगतः [13]समपैति तापः किं किं न शर्म महतामुदये जगत्याम् ॥ १५ ॥
[14]आखण्डलेन विधृतं जिनराजपृष्ठे [15]भामण्डलं किल रराज करैरखण्डम् ।
मार्तण्डमण्डलमिवाऽऽर्हतसेवयेव नित्योदयं न तमसा श्रमसादनीयम् ॥ १६ ॥
निश्शोकतां समधिगच्छति सर्वलोकस्तीर्थेशसन्निधिबलाद[16]चलातलेऽस्मिन् ।
इत्येवमाह नवपल्लवनैर्जिनेन्दोरारादुपेत्य किमु चैत्यतरुर[17]शोकः ॥ १७ ॥
केचिज्जिनेशमभितुष्टुवुरात्ततुष्ट्या [18]प्राचीकटन् नटनकर्मघटां च केचित् ।
[19]सर्वाङ्गसाङ्गविधिना जिनपूजनानि केचिद् व्यधुर्जनवरा नवरागभाजः ॥ १८ ॥
[20]पुष्पाणि तत्र ववृषुर्बहुसौरभाणि संसिच्य [21]गन्धसलिलैः परितो धरित्रीम् ।
[22]आजानुभागमपि मेघकुमारदेवाः सेवाविधेरसमयं समयं [23]प्रतीक्ष्य ॥ १९ ॥

---

[ 10 ] 1 'अक्षोभः' न क्षुब्धो विचलितो वा । 2 'यथार्थनामा' अर्थमनतिक्रम्य 'महावीर' इति यथार्थं नाम यस्य सः । 3 'अवधूतवधूविलासः' तिरस्कृतपत्नीविलासः ।

[ 11 ] 4 'निर्दम्भदुन्दुभिः' दम्भः कपटस्तेन रहितः निर्दम्भश्चासौ दुन्दुभिश्चेति । "भगवतः देवताकृतैकोनविंशतिरतिशयानां मध्ये द्वादशोऽतिशयः" । 5 'सन्तर्जयन्' तिरस्कुर्वन् ।

[ 12 ] 6 'सालत्रयी' प्राकारत्रिकम् । "समवसरणे रत्न-सुवर्ण-रूप्यमयं प्राकारत्रयं देवता रचयन्तीति सप्तमोऽतिशयः" । 7 'वलयाऽऽकृतिशैलराजाः' वलयाकारकाः श्रेष्ठपर्वताः ।

[ 13 ] 8 'सिंहासनम्' मृगेन्द्रासनम्, "स्फटिकरत्नालङ्कृतमिति तृतीयोऽतिशयः" ।

[ 14 ] 9 'छत्रत्रयी' "खे छत्रत्रयं देवता धारयन्तीति चतुर्थोऽतिशयः" । 10 'प्रचयीकृतानाम्' एकत्रीकृतानाम् । 11 'जगत्त्रयनिविष्टपदार्थसार्थप्रोद्भासनाय । त्रिषु जगत्सु निविष्टः स्थितो यो पदार्थानां वस्तूनां सार्थो समूहस्तं प्रोद्भासनाय प्रकाशनाय ।

[ 15 ] 12 'उच्चामरावलिविकीर्णसितप्रकीर्णकाऽऽन्दोलनैः' "उर्ध्वे खे चमरा इति द्वितीयोऽतिशयः" । उच्चामराणामावलिभिः विकीर्णाः, प्रसृताः सितप्रकीर्णकाः श्वेतरोमगुच्छास्तेषामान्दोलनैः संचालनैरिति । "चामरं वालव्यजनं रोमगुच्छः प्रकीर्णकम्" इति हैमः [अभि० चिं० कां० ३ श्लो० ३८१] 13 'समपैति' नश्यति ।

[ 16 ] 14 'आखण्डलेन' इन्द्रेण । 15 'भामण्डलम्' "भानां प्रभाणां मण्डलमिति कर्मक्षयजस्तृतीयोऽतिशयः" ।

[ 17 ] 16 'अचलातले' पृथ्वीतले । 17 'चैत्यतरुरशोकः' "चैत्याभिधानो द्रुमोऽशोकवृक्षो देवकृतो नवमोऽतिशयः" ।

[ 18 ] 18 'प्राचीकटन्' प्राकाशयन् । 19 'सर्वाङ्गसाङ्गविधिना' नवाङ्गपूजाऽष्टप्रकारकविधियुक्तेन । साङ्गमाचाराद्यङ्गसूत्रं तस्मिन् कथितविधिना ।

[ 19 ] 20 'पुष्पाणि' "पञ्चवर्णानां जानूत्सेधप्रमाणपुष्पाणां वृष्टिरिति षोडशोऽतिशयः" । 21 'गन्धसलिलैः' "गन्धोदकैरिति पञ्चदशोऽतिशयः" । 22 'आजानुभागम्' जानूत्सेधप्रमाणम् । 23 'प्रतीक्ष्य' दृष्ट्वा ।

वश्या इवास्य परितो भुवनाधिभर्त्तुस्तस्थुः प्रसन्नमनसः सुदृशः सदस्याः ।
पीता वचोऽमृतरसात्तरसाऽस्तमोहास्ते द्वादशाऽऽस्रविदिशस्त्रिदशाधिपाद्याः ॥ २० ॥
यत्कोटिकोटि[1]गणितोऽ[2]प्यधियोजनान्तमास्ते स्म मानव-पशु-द्युसदां समूहः ।
चित्रं न तत् किमु विभोः सकलोऽपि लोकोऽलोकश्च माति न [3]विबोधमयाऽऽत्मदर्शे ॥ २१ ॥
आयोजनं जिनविभोर्ध्वनि[4]रध्वनीनान् [5]उद्बोधयन् [6]शिवगमे परमागमोक्त्या ।
स्पष्टीकरोति भवसम्भववार्द्धिवार्द्धिक्षोभेण लाभमिह [7]रत्नवरत्रयस्य ॥ २२ ॥
[8]वाणी विभो[9]रमर-मर्त्त्य-पशुस्वभाषासंवादमेत्य सुगमाधिगमं वितेने ।
मन्दाकिनीव सरसा [10]त्रिपथप्रयाता [11]नानानयैर्ननु सहस्रमुखीति रूढा ॥ २३ ॥
[12]ईतिर्न [13]भीतिर[14]पनीतिर[15]सत्प्रतीतिस्तन्मण्डले स्म न [16]रुजा [17]प्रसरीसरीति ।
यत्र प्रभुः [18]कनकपद्मनिविष्टपादः कैवल्यभाग् विहरते वरतेजसाऽऽढ्यः ॥ २४ ॥
समवसरणलक्ष्मीर्लक्षणैरित्युदीता [19]जवनपवनयोगा[20]दुल्लसत्केतुहस्तैः ।
नटति झटिति शुभ्रैर्दिव्यपुष्पैः प्रवृष्टैस्तदनु विहसतीव स्वामिसंसर्गतुष्टा ॥ २५ ॥

अथ प्रथमतः प्रभु[21]स्त्रिदशराज-भूमीभुजां
लसत्सदसि सङ्गते सुभगमङ्गले स्फूर्ज्जति ।
[22]पदत्रितयमादिशद् विशदसर्वभावे विशत्
बभूव [23]गणभृद्गणस्तदनु तस्य मीमांसया ॥ २६ ॥

श्रीइन्द्रभूतिरपरोऽग्निपदाद् विभूतिः श्रीवायुभूतिरिति गोतमवंशजाताः ।
व्यक्तः सुधर्मगणभृद् गणिमण्डितोऽथ श्रीमौर्यपुत्र इति तद् द्वितयं गणेन्द्रौ ॥ २७ ॥

[21] 1 'यत्कोटिकोटिगणितः' येषां 'मानव-पशु-द्युसदाम्' नृ-तिर्यग्-देवानां कोटिकोटिसङ्ख्यातः । 2 'अधियोजनान्तम्' "योजनप्रमाणमिति कर्मक्षयजः प्रथमोऽतिशयः" । 3 'विबोधमयाऽऽत्मदर्शे' केवलज्ञानयुक्ताऽऽत्मरूपदर्शे ।

[22] 4 'अध्वनीनान्' पान्थान् "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिकदेशिकौ" इति हैमः [ अभि० चिं० कां० ३ श्लो० १५७ ]। 5 'उद्बोधयन्' उपदेशयन् । 6 'शिवगमे' मोक्षगमने । 7 'रत्नावरत्रयस्य' ज्ञान-दर्शन-चारित्रात्मकश्रेष्ठरत्नत्रिकस्य ।

[23] 8 'वाणी' भाषा अर्द्धमागधी । 9 'अमर-मर्त्त्य-पशुस्वभाषासंवादम्' देव-नर-तिरश्चां भाषाया संवदतीति "वाणी नृ-तिर्यक्-सुरलोकभाषासंवादिनी योजनगामिनी च' इति कर्मक्षयजो द्वितीयोऽतिशयः" [ अभि० चिं० कां० १ श्लो० ५९ ]। 10 'त्रिपथप्रयाता' त्रिषु पथिषु गता । 11 'नानानयैः' विविधनयैः "नया अनेकविधास्तथापि तेषां पञ्चत्वं लक्षणतो निर्दिष्टं तत्त्वार्थाधिगमादिसूत्रेषु । यथा "नैगम-संग्रह-व्यवहार-र्जुसूत्र-शब्दा नयाः"–"आद्यशब्दौ द्वि-त्रिभेदौ" इति तत्वार्थसूत्रम् [ अ० १ सू० ३४–३५ ]।

[24] 12 'ईतिर्न' "धान्याद्युपद्रवकारी प्रचुरो मूषकादिः प्राणिगणो न स्यादिति कर्मक्षयजः षष्ठोऽतिशयः"। 13 'भीतिः' "स्वराष्ट्रात् परराष्ट्राच्च भयं [ न स्याद् ] इत्येकादशोऽतिशयः" । 14 'अपनीतिः' "परस्परविरोधः [ न स्याद् ] इति पञ्चमोऽतिशयः" । 15 'असत्प्रतीतिः' असद्वस्तूनां प्रतीतिः । "मारिरौत्पातिकं सर्वगतं मरणम्, अतिवृष्टिः निरन्तरवर्षणम्, अवृष्टिः सर्वथा वृष्ट्यभावः, तथा दुर्भिक्षं भिक्षाणामभावः–इत्याद्यसद्वस्तुदर्शनं [ न स्याद् ] इति सप्तम-अष्टम-नवम-दशमातिशयाः" । 16 'रुजा' "रोगो ज्वरादिः [ न स्याद् ] इति चतुर्थोऽतिशयः" । 17 'प्रसरीसरीति' अतिशयेन प्रसारमाप्नोति । 18 'कनकपद्मनिविष्टपादः' "सुवर्णकमले न्यासीकृतौ पादौ येन स इति देवकृतः षष्ठोऽतिशयः" ।

[25] 19 'जवनपवनयोगाद्' वेगयुक्तपवनात् । 20 'उल्लसत्केतुहस्तैः' उल्लसन्तश्च ते केतवश्च ध्वजा एव हस्तास्तैः ।

[26] 21 'त्रिदशराज-भूमीभुजाम्' इन्द्र-राज्ञाम् । 22 'पदत्रितयम्' 'उत्पाद-व्यय-ध्रौव्ययुक्तं सत्' इति तत्त्वार्थसूत्रम् [ अ० ५ सू० २९ ] इति पदत्रयीम् । 23 'गणभृद्गणः' एकादशगणधरसमूहः ।

* P गणतो ।

तस्मादकम्पित इतोऽचलशब्दपूर्वो भ्राता गणप्रभुरभूद् गुणरत्नभूमिः ।
मेतार्य आर्यजनकार्यकृतां मुनीनां शास्ता प्रभासगणभृच्चरणप्रवीणः ॥ २८ ॥

एवं विधाय गणिनः श्रुतिसम्पदाढ्यान् दार्ढ्येन तीर्थमपि धर्मधियां समर्थम् ।
भव्याम्बुजानिव विबोधयितुं स लोके नव्यांशुमान् प्रवितताम गवां विलासान् ॥ २९ ॥

मोहाभ्यमित्रविधिना गणनायकेभान् सज्जान् लसत्त्रिपदिकान् पुरतो विधाय ।
संस्कृत्य वाडवगणांश्चरणोपदेशे देशे चचाल विजिगीषुरिवाऽऽप्तराजः ॥ ३० ॥

संवर्धयन् समितितत्परसाधुलोके भावाद् गुणाधिकतया परमार्थवृत्तिम् ।
न्यस्यन्नपूर्वकरणे स नियोगिराजान् श्रीइन्द्रभूतिकलितश्चलितो बभासे ॥ ३१ ॥

श्रीधर्मचक्रमनुवृत्य कृतप्रयाणः सद्यः प्रसाधितसुमागधलोकपूज्यः ।
शुद्धव्रतप्रवरदामनियोजिताऽऽज्ञः प्राज्यप्रभासमधिगम्य चिरं स रेजे ॥ ३२ ॥

प्राभाकरीं रुचिमधः कृतवान् विलासैः काये गवां विधिवशाऽऽत्मनिदर्शनेन ।
ब्राह्मीमपि ध्रुवनियोगमहाबलेन तां वैष्णवीमथ जिनो गतदोषभुक्त्या ॥ ३३ ॥

निष्काश्य दास्यकरसर्वपलाददोषं कादम्बरीरसकथां वितथां वितन्वन् ।
व्यावर्तयंश्च जनतां परदारभोगाच्चक्रीव सर्वविषयान् रुरुचे स जित्वा ॥ ३४ ॥

---

[ ३० ] १ 'त्रिपदिकान्' त्रिपदी गात्रबन्धः, पक्षे 'उप्पन्नेइ वे'त्यादिका । २ 'वाडवगणान्' अश्वान् पक्षे विप्रान् । ३ 'चरणम्' चारित्रं पक्षे रणोपदेशे चः समुच्चये ।

[ ३१ ] ४ 'समिति॰' समितय ईर्याद्याः पक्षे सङ्ग्रामः । यद्वाऽऽस्थानं समितिस्तत्र तत्पराः । ५ 'गुणाधिकतया' गुणा धैर्यादयः पक्षे गुणस्थानकाधिकतया । ६ 'परमार्थवृत्तिम्' परमार्थं आध्यात्मिकभावः पक्षेऽर्थसम्बन्धिनीं वृत्तिमाजीविकाम् । ७ 'अपूर्वकरणे' करणानि राजदेयभागस्थानानि पक्षेऽपूर्वकरण आत्मवीर्यविशेषः । 'नियोगिराजान्' ८ नियोगिनो मन्त्रिणः पक्षेजिनाऽऽदेशकारिणः ।

[ ३२ ] ९ '॰मागधलोकपूज्यः' मागधा मगधदेशवासिनः पक्षे मागधतीर्थवासिदेवास्तेषु पूज्यः । १० 'शुद्धव्रतप्रवरदामनियोजिताऽऽज्ञः' शुद्धमहाव्रतान्येव वरदाममालिका तत्र निर्दिष्टाऽऽज्ञः पक्षे वरदामतीर्थम् । ११ 'प्राज्यप्रभासम्' प्राज्यां प्रकृष्टभासं दीप्तिं पक्षे तीर्थम् ।

[ ३३ ] १२ 'प्राभाकरीम्' प्रभाकरः सूर्यः पक्षे प्रभाकरो मीमांसकविशेषः । १३ 'रुचिम्' रुचिः कान्तिरिच्छा च ताम् । १४ 'काये' देहे षट्कायलक्षणे । १५ 'गवाम्' कान्तीनां पक्षे वचसाम् । १६ 'विधिवशाऽऽत्मनिदर्शनेन' विधिर्ज्ञानमयाऽऽत्मिकधनेन । १७ 'ब्राह्मीम्' ब्राह्मीमपि रुचिमधस्कृतवान् । १८ 'ध्रुवनियोग॰' ध्रुवाधिकारेण नियोगकथने । १९ '॰नियोग॰' नियोगः निरासः । २० 'वैष्णवीम्' वैष्णवीमपि रुचिं निर्दोषाऽऽहारेण रात्रौ भोजननिषेधेन राजपक्षे सूर्य–ब्रह्मविष्णूनां रुचिपराजयात् ॥

[ ३४ ] २१ '॰पलाददोषम्' मांसभोजनम् । २२ 'कादम्बरी॰' कादम्बरी सुरा । २३ 'सर्वविषयान्' सर्वे विषयाः शब्दादयः पक्षे देशाः ।

---

[ 28 ] 1 'चरणप्रवीणः' चरणं चारित्रं सावद्ययोगत्यागस्तस्मिन् प्रवीणः कुशलः ।

[ 29 ] 2 'गणिनः' गण्यन्ते पूज्यतयेति गणिनस्तानतनूचानान् "अनूचानः प्रवचने साङ्गेऽधीती गणिश्च सः" इति हैमः [ अभि॰ चिं॰ कां॰ १ श्लो॰ ७८ ] । 3 श्रुतिसंपदाढ्यान्' श्रुतिः द्वादशाङ्गी सैव संपत् तयाऽऽढ्यान् सहितान् । 4 'तीर्थम्' तीर्यते संसारसमुद्रोऽनेनेति तीर्थं प्रवचनाधारः साधु-साध्वी-श्रावक-श्राविकास्वरूपश्चतुर्विधसङ्घस्तम् । प्रथमगणधरं वा । 5 'भव्याम्बुजान्' भव्या मोक्षगमनयोग्यास्त एवाम्बुजास्तान् । 6 'विबोधयितुम्' उपदेशयितुं विकासयितुं वा । 7 'नव्यांशुमान्' नवीनसूर्यः । 8 'गवाम्' वाचां किरणानां वा ।

[ 30 ] 9 'मोहाभ्यमित्रविधिना' मोहः कामस्तस्मादभ्यमित्रविधिनाऽऽभिमुख्येन मित्रानलंगामी तस्य विधिस्तेन । 10 'गणनायकेभान्' गणनायकेष्विभान् हस्तिनः श्रेष्ठगणधरानित्यर्थः । 11 'त्रिपदिकान्' त्रिपदी गात्रबन्धः गात्रयोर्द्वयोरग्रजङ्घयोः पश्चिमजङ्घायां गजस्य बन्धस्तान् । 12 'आप्तराजः' आप्तो हितोपदेशकत्वादाप्त इव स आप्तस्तेषु राजेति ।

[ 32 ] 13 'श्रीधर्मचक्रम्' "श्रीधर्मप्रकाशकं चक्रमिति देवकृतः प्रथमोऽतिशयः" । 14 'अनुवृत्य' अनुसृत्य ।

[ 34 ] 15 '॰पलाददोषम्' राक्षसस्वरूपचौरादिदोषम् ।

[ 37 ] 16 'विबुधसन्निधिः' "भवनपत्यादिचतुर्विधदेवनिकायानां सन्निधिः सामीप्यं सा जघन्यतोऽपि कोटिर्भवतीति देवकृतोऽष्टादशोऽतिशयः" । 17 'पद्मादयः' पद्मादिनवनिधयस्ते चेमे–"महापद्मश्च पद्मश्च शङ्खो मकर-कच्छपौ । मुकुन्द-कुन्द-नीलाश्च चर्चाश्च निधयो नव" । इति हैमः [ अभि॰ चिं॰ कां॰ २ श्लो॰ १०७ ] ।

प्रियतममभूद् रक्षायोगाद् यदेव हि गोपुरं[1]
विशति यतिनामीशो तस्मिन्ननिष्टमिदं तदा ।
गज-हय-रथे साङ्कर्येणापथे[2] पथकारिणि
स्फुरति पुरतः को वा स्वार्थे प्रियो यदि वाऽप्रियः ॥ २८ ॥

वहति महति स्वैरं लोके पुरो निगमेशिनां[3]
मधुरचरितैर्गायं गायं नटन्नटनायकः ।
रसजननतः खेदच्छेदं[4] चकार सकारणः
सरसवचनाऽऽरम्भः स्तम्भच्छिदे[5] विदुषां न किम् ? ॥ २९ ॥

[6]बहुसुमनसामामोदेना[7]मवच्छरदागमः
कुनयजडताप्रादुर्भावाद्विमागमसम्भवः ।
तमसि सुहृशां किञ्चिच्छेषः कृतः सुकृतोदयैः
सुरभिरभितः श्रीमत्सूरेर्यशोभिरयं जनः ॥ ३० ॥

व्यसनसरसि ग्रीष्मो भीष्मस्तदा विशदाशयै-
र्धनवितरणे हर्षाद् वर्षाऽऽगमः समनीयत ।
षडपि ऋतवश्चैवं दैवं विमृश्य शुभं नृणां
किमनुगुणतां[8] भेजुः सूरेः समागमने पुरे ॥ ३१ ॥

भवनशिरसि व्यारूढानां तदा क्षणवीक्षणे
[9]नवमृगदृशां मेषाभावा[10]न्मनागपि तद्दृशाम् ।
अतिरुचिरताऽऽरम्भाद् रम्भा[11] अमूरिति निश्चय-
श्चतुरमनसि प्रादुर्जज्ञे सविभ्रमभावनात् ॥ ३२ ॥

प्रतिगृहमुखं तत्र न्यासीकृते मणितोरणेऽ-
भ्युदितदिनकृद्[12] बिम्बालम्बानुबिम्बनसन्ततिः ।
[13]द्विगुणसुषमामाविभ्रक्रे निरस्ततमास्तमा
समवगमने सान्द्रं चान्द्रं रुचां पटलं तथा ॥ ३३ ॥

गुरुरपि विशन्नस्यां[14] वश्यां जगज्जनतां व्यधा-
[15]दभिनवसुधालिप्ते कुड्ये[16] परःशतबिम्बितैः ।
सममिव पुरीलोकं साक्षात् पवित्रयितुं स्वतः
प्रणतममदापूर्ण्णं[17] तूर्ण्णं प्रमोदयिताऽऽशिषा ॥ ३४ ॥

---

[ 28 ] 1 'गोपुरम्' पुर्द्वारम् । 2 'साङ्कर्येण' व्याप्तेन ।

[ 29 ] 3 'निगमेशिनाम्' विबुधमहात्मनाम् । 4 'खेदच्छेदम्' अध्वश्रमनाशम् । 5 'स्तम्भच्छिदे' स्तम्भो जाड्यं तं छिनत्तीति च्छित् तस्मै ।

[ 30 ] 6 'बहुसुमनसाम्' अतिपुष्पाणाम् । 7 'आमोदेन' सुगन्धेन ।

[ 31 ] 8 'अनुगुणताम्' औचित्यम् ।

[ 32 ] 9 'नवमृगदृशाम्' नव्यकमलाक्षीणाम् । 10 'मेषाभावात्' रोमशाभावात् । 11 'रम्भाः' देवस्त्रियः ।

[ 33 ] 12 '°दिनकृद्°' दिनकृत् सूर्यः । 13 'द्विगुणसुषमाम्' द्विगुणसातिशायिनीं शोभाम् ।

[ 34 ] 14 'अस्याम्' पुर्य्याम् । 15 'अभिनवसुधालिप्ते' अभिनवा नव्या या सुधा तया लिप्ते 'सुधा चूनो' इति भाषायाम् । 16 'कुड्ये' भित्तौ । 17 'अमदाऽऽपूर्णम्' अमदोऽगर्वस्तेनाऽऽपूर्णम् ।

[1]भवनवलभौ श्राद्धैः पुष्पस्रजोऽवललम्बिरे
परिमलमिलद्भृङ्गा[2]रावैरिव स्तुतिवादिनीः ।
गणधरगुरौ जाग्रद्ब्रह्मा‌ऽऽयुधे समुपेयुषि
धनुष इव किं [3]जीवा एताः [4]स्मरस्य विपातुकाः ॥ ३५ ॥

वरयुवतिभिर्द्वारे द्वारे सुमङ्गलकर्मणि
सपदि वितते स्थाले मुक्ताभृतेऽत्र [5]हिरण्मये ।
प्रतिकृतिमिषात् तासां [6]नागाङ्गना इव भूतला-
[7]ल्ललितवपुषः प्राप्ता रेजुर्गणीन्द्र[8]निनंसया ॥ ३६ ॥

[9]गणिदिनमणिं दर्शं दर्शं प्रमोदमहोदयाद्
*विहसितमुखाः पद्मिन्यस्ता व्यधुर्मधुरक्रियाः ।
नटनमटनप्रादक्षिण्यं स्थिरक्षणवीक्षणं
प्रणमति मतिस्नेहाद् गेहादुपेत्य पुरो गुरोः ॥ ३७ ॥

[10]रसपरवशाः काश्चिद् गानं विकस्वरसुस्वरैः
[11]सरसिजदृशः प्राचामाचारजैर्धवलैर्व्यधुः ।
यदनुभवतस्ताम्राक्षीणां स्वरः †[12]परपुष्टता-
न्वयपरिगतां गौणीं वृत्तिं विनिश्चिनुतेतराम् ॥ ३८ ॥

‡अरुणवसनैश्छन्ने मार्गे नखांशुभरैरिव
परमगुरवश्चेलुर्यत्नात् तदा दधतः क्रमौ ।
उचितमुदये [13]सौरैः पादैर्भुवोऽपि सरागता
प्रभवति तमश्छित्त्यै दोषापहारविधौ पटुः ॥ ३९ ॥

परिकलितया[14]ऽऽरामैः सौम्यैर्महेश्वर[15]लक्ष्मणे-
र्भुवपरिणतिप्रौढो[16]च्छ्राये सुधर्मसभाश्रये ।
गणिपतिगुरुस्थित्यामेवं [17]सुपर्वपुरस्सर-
ममरनगरीसख्यं मुख्यं तया नियतं दधे ॥ ४० ॥

फणिपतिसमासीनः शङ्खेश्वरः प्रभुरन्तिके-
ऽस्य जयति परं पार्श्वः श्रीमान् महेन्द्रमनःप्रियः ।
गुरुपरिचयादिन्द्रोपेन्द्रा‌ऽऽगमेऽत्र न विस्मयः
[18]स्यद्दुतिपुरे लङ्कापुर्याः प्रभाभरभासुरे ॥ ४१ ॥

[ 35 ] 1 'भवनवलभौ' भवनानि गृहाणि तेषां वलभिः वंश-पञ्जरादिच्छदिष आधारस्तस्मिन् । 2 'भृङ्गाऽऽरावैः' भ्रमरगुञ्जारवैः । 3 'जीवा' गुणः । 4 'स्मरस्य' कामदेवस्य ।

[ 36 ] 5 'हिरण्मये' सुवर्णयुक्ते । 6 'नागाङ्गनाः' नागलोकस्त्रियः । 7 'ललितवपुषः' कान्तदेहाः । 8 °'निनंसया' नन्तुमिच्छया ।

[ 37 ] 9 'गणिदिनमणिम्' गणिषु दिनमणिः सूर्य इव तम् ।

[ 38 ] 10 'रसपरवशाः' कामाधीनाः । 11 'सरसिजदृशः' कमलाक्ष्यः । 12 'परपुष्टतान्वय°' कोकिलवंशः ।

[ 39 ] 13 'सौरैः' सूरिसम्बन्धिभिः ।

[ 40 ] 14 'आरामैः' उद्यानैः । 15 '°लक्ष्मणेः' लक्ष्मीवद्भिः । 16 '°उच्छ्राये' आरोहे । 17 'सुपर्वपुरस्सरम्' पर्यूषणादिपर्वपूर्वकं देवतापूर्वकं वा ।

[ 41 ] 18 'स्यद्दुतिपुरे' सीरोहीनगरे ।

* A विहसितदृशः । † B पुर° । ‡ B °वसनैः ।

वसति धनदः सर्वः पौरः परं न कुबेरकः
परमरतिमान् [1]वारुण्यां न [2]प्रचेतसि चाग्रिमः।
न चपलकलां क्वाप्यादत्ते स पुण्यजनोऽप्यहो
प्रमुदितमनाः सद्यः [3]सौरोदये न जडाऽऽत्मभूः॥ ४२॥
बहुकुशलता[4]रामाः [5]कामाऽऽस्पदं [6]सुमनःप्रियाः
निदधति [7]रसं [8]पात्रव्यूहे सिताम्बरसङ्गते।
सुकविकलया कान्ताः शुद्धैर्मरुद्भि[9]रुपासिताः
प्रसृमरमुखामोदा [10]ह्यस्यां [11]महाशयनन्दनाः॥ ४३॥
अभिनवधनावास्या [12]स्फीताश्चिरं [13]मगधश्रिय-
स्तपगणगुरोस्तस्यां स्थित्या [14]सुधर्मसधर्मणः।
अभिनतमहाराजप्रीत्या प्रभासविशेषता
पुरि परिचिता भव्या येनोत्सवैर्वरदा मता॥ ४४॥
समयचतुरैर्जीवाजीवादयोऽङ्गदयोदय-
प्रकरणबुधैर्विश्वेऽप्यर्था मतेर्विषयीकृताः।
गणनृपगुरु[15]प्रत्यासत्त्या स्फुटं चतुरङ्गता-
ऽजनि फलवती तेषां तस्माद् विमोहपराजयः॥ ४५॥
विजयचरितं सूरेर्दूरे कुलाचलचूलिका-
स्वविचलरसाद् गायन्ति स्मोल्लसन्म[16]युबालिकाः।
स्फुटतरतया जातं पुण्यावदातशतैरिदं
[17]परमरमया रम्ये तस्मिंश्चिरंतनपत्तने॥ ४६॥
बहुलसुकृतैश्चातुर्मास्याः क्रमात् समतिक्रमे
तपसि तपसां राजा जीवाह्वयस्य दृढाऽऽग्रहात्।
उदयनगरे श्रीमत्पार्श्वाभिषेकविधित्सयाऽ-
भ्यचलदचलश्रेणीकीर्णाध्वनाधि[18]कधामवान्॥ ४७॥
क्वचन [19]विटपश्रेण्या [20]गोत्रस्थितिं स्थगयन् निजा-
मपथगमनेनैवाऽऽलब्धः समेखलतां गिरिः।
परमगुरुणा [21]कूटैर्भीमः परं ददृशे पथि
कुनृपतिरिव क्रूरक्रोडाऽऽश्रयेण [22]कुरङ्गभूः॥ ४८॥

[ 42 ] 1 'वारुण्याम्' मदिरायाम्। 2 'प्रचेतसि' वरुणे। 3 'सौरोदये' सूर्योदये।

[ 43 ] 4 '°रामाः' स्त्रियः। 5 'कामाऽऽस्पदम्' मोहस्थानम्। 6 'सुमनःप्रियाः' देवस्त्रियः रम्भादयः। 7 'रसम्' 'विभवाद्यैरभिव्यक्तः सामाजिकानां वासनारूपेण स्थिते रत्यादिको भावः कविसहृदयै रस्यमानो रसः शृङ्गारादिः। 8 'पात्रव्यूहे' पात्राणि नाट्येऽधिकृतास्तेषां व्यूहे समूहे। 9 'मरुद्भिः' देवैः। 10 'अस्याम्' नगर्याम्। 11 'महाशय-नन्दनाः' महेच्छपुत्राः।

[ 44 ] 12 'स्फीताः' विस्तृताः। 13 'मगधश्रियः' मगधदेशलक्ष्म्याः। 14 'सुधर्मसधर्मणः' सुधर्मस्वामिगणधरसमानस्य।

[ 45 ] 15 '°प्रत्यासत्त्या' सेवया।

[ 46 ] 16 '°मयुबालिकाः' किंनरबालाः। 17 'परमरमया' परमलक्ष्म्या।

[ 47 ] 18 '°अधिकधामवान्' अधिकप्रतापवान्।

[ 48 ] 19 'विटपश्रेण्याः' वृक्षराज्याः। 20 'गोत्रस्थितिम्' अभिजनस्थितिम्। 21 'कूटैः' शृङ्गैः। 22 'कुरङ्गभूः' मृगभूमिः।

अविरलदलद्वल्लीवेल्लत्सशोणिमपल्लवैः
शबरयुवतीगीतैः[1] स्फीतैः प्रणुन्न इवाचलः ।
नटनघटनां रागात् सूरेः पुरस्समजीघटद्
मृदुलपवनाद् गुञ्जद्वेणुध्वनि[2]ध्वनितोत्सवः ॥ ४९ ॥

क्वचन निवसत्पल्ली[3]भिल्लीजनेन सविस्मयं
करकिसलयैर्गुञ्जा[4]पुञ्जाऽऽदरेण विभूषितैः ।
विहितमसकृत् सूरिर्मुग्धप्रणामविधिं दृशा
प्रतिपदमनारम्भात् सम्भावयन् पथि निर्ययौ ॥ ५० ॥

ज्वलदनलजज्वालामालाजटाल[5]मनाकुलः
कुलगिरिकुलाचारेणोच्चैश्चलन्तमिवाचलम् ।
यतिमिव दृढध्यानं साक्षान्निरैक्षत सूरिराट्
क्वचन रचनाभीमे सिंहासनेन शिलातले ॥ ५१ ॥

अतिमृदुलताऽऽरामाः कामाश्रयः परभोगिनां
*किसलयकरैर्वातोद्धूतैर्गुरुं प्रणता लताः ।
तरणि[6]किरणक्लेशो माऽसां प्रभूदिति भूधरो[7]ऽ-
स्थगयदभितो दिक्चक्रं चोत्तरैः शिखरैः खरैः ॥ ५२ ॥

जलदपटलीवासो[8]ऽवाप्य क्वचिच्च सिताम्बरः
समजनि दवग्रासात्[9] क्वापि स्फुटं स दिगम्बरः ।
भयमुपनयन् भिल्लोदीर्णैर्[10]द्विधाऽपि च भल्लकैः[11]
क्वचन सुरभिर्सल्ली†वल्लीवनैर्[12]जननन्दनः ॥ ५३ ॥

शबरपृतनानाथः[13] सूरेः पदाम्बुजमानमन्
मनसि रसिको वाचां पाने सपानवराधिपः ।
शपथ[14]मदधात् त्रस्यज्जन्तोर्वधस्य रहस्यवित्
परमगुरुणाऽऽदिष्टे शिष्टे महोदयदेशने ॥ ५४ ॥

---

[ 49 ] 1 'शबरयुवतीगीतैः' भिल्लस्त्रीगायनैः । 2 '°वेणुध्वनि°' वेणुः वंशस्तस्य ध्वनिः शब्दः ।

[ 50 ] 3 '°पल्ली°' पल्ली ग्रामम् । 'पल्ली च ग्रामके कुड्याम्' इति हैमः [ अने० सं० कां० २ श्लो० ५०८ ] । 4 'गुञ्जा°' गुञ्जा कृष्णला 'चणोठी' इति भाषायाम् । 'कृष्णला तु गुञ्जा' इति हैमः [ अभि० चिं० कां० ४ श्लो० २२१ ]

[ 51 ] 5 '°जटालम्' सटायुक्तम् ।

[ 52 ] 6 'तरणि'° तरणिः सूर्यः । 7 'भूधरः' पर्वतः ।

[ 53 ] 8 'जलदपटलीवासः' जलदः मेघस्तस्य पटली च्छदि-स्तदर्थं वासः वस्त्रम् । 9 'दवग्रासात्' दावानलकवलात् । 10 'भिल्लोदीर्णैः' किरातोत्क्षिप्तैः । 11 'भल्लकैः' बाणैः । 'भल्लं भल्लुक-बाणयोः' इति हैमः [ अने० सं० कां० २ श्लो० ५१५ ] । 12 'सल्लीवल्लीवनैः' सल्लीवृक्षविशेषस्तस्य वल्लयः लतास्तासां वनम् ।

[ 54 ] 13 'शबरपृतनानाथः' भिल्लसैन्यपतिः । 14 'शपथम्' प्रतिज्ञाम् ।

---

* P °किशलय° । † P मल्ली° ।

[1]सरससरसां तीरे धीरे स्फुटे [2]तटिनीतटे
पटनिलयने पूर्वं जीवाह्वयेन निवेशिते ।
प्रभुरधिवसन् शुद्धाचारैः पटुर्वटुभिः स्तुतः
[3]शबरविषयं धर्माऽऽधानैः स [4]पावनमादधे ॥ ५५ ॥

[5]क्रमगमनिकायोगाद् योगातिशायिमहस्विनां
समुदययुतः प्रापद् व्यापद्भरस्य विनाशकः ।
[6]विशदचरणोत्साही नाहीपुरं नृपुरन्दर-
प्रणमतशिरोरत्नज्योतिः[7]परीतपदः प्रभुः ॥ ५६ ॥

अधिगतगणाधीशाभ्यासाऽऽगमान् मुदमावहन्
उदयनगराधीशः प्रातर्जनैरथ तुष्टुवे ।
जय जय विभो ! त्वं सुन्दर्यां विलोकनमादरात्
कुरु गणगुरुप्राप्तौ पुर्यां महोत्सवसन्ततेः ॥ ५७ ॥

प्रतिजनगृहं जज्ञे पुष्पस्रजामवलम्बनं
प्रसृमरयशोराशेर्भासां गुरोरिव साम्प्रतम् ।
निशि दिशि दिशि स्वैरभ्रान्त्या द्विजाधिपतिप्रिया
पटलकमिव प्रातर्ब्रह्मप्रवृत्तमिवाचलम् ॥ ५८ ॥

उदयननगे सौरं तेजश्चकार सरागता-
मुदयनगरेऽप्येतच्चेतश्चमत्कृतिकारणम् ।
सपदि कमलाऽऽमोदः प्रादुर्बभूव ततो द्वये
भुवि सुमनसां राज्या राज्यातिशायिमुदो धृताः ॥ ५९ ॥

अशुभततरां लक्ष्मीस्[8]तार्क्ष्याग्रजातिसमुत्थिता
व्यपह्नुततमा रत्नश्रेणी विभूषणभासुरा ।
प्रगुणिततरालङ्कारश्रीस्तथा हयवाहने
वदति विभवं सौरांशूनामुपस्थितिशालिनम् ॥ ६० ॥

प्रसरति परं सौरे गौरे रुचां निचये चये
दधति सुतरां वैवर्ण्यं ते [9]द्विजेशकलाभराः ।
प्रकृतिशिशिरा अप्य[10]आस्यायै मुदां न कलङ्किनो
न भवति रतिर्दोषाधारे सुवृत्तमहोदये ॥ ६१ ॥

---

[ 55 ] 1 'सरससरसाम्' सुष्टुसरोवराणां कोकूयितादि-कुण्डानाम् । 2 'तटिनीतटे' मन्दाकिनीनदीतीरे । 3 'शबरविषयम्' भिल्लप्रदेशम् । 4 'पावनम्' पवित्रम् ।

[ 56 ] 5 'क्रमगमनिकायोगात्' क्रमैः पादैः गमनिका विहार-स्तस्य योगात् । 6 'विशदचरणोत्साही' निर्मलचारित्रे उत्साही । 7 'परीतपदः' परीता परिवेष्टिता पादा यस्य सः ।

[ 60 ] 8 'तार्क्ष्याग्रजाति°' तार्क्ष्या अश्वास्तेष्वप्यग्रजातिः श्रेष्ठः ।

[ 61 ] 9 'द्विजेशकलाभराः' द्विजेशश्चन्द्रस्तस्य कलाभराः । 10 'आस्यायै' स्थित्यै ।

[1]हरिकरिवरः सिं[2]न्दूराक्तं शिरः समघर्षयत्
  कुलशिखरिणि प्राच्ये तस्मादिवारुणिमाश्रये ।
मदजलललद्भृङ्गश्रेण्या समं क्वचिदुद्ययौ
  तिमिरनिवहः सावर्ण्येनोद्भवद्भयसम्भ्रमात् ॥ ६२ ॥
दिशि दिशि निशि स्फारास्तारा दधुर्मधुरप्रभा-
  [3]मुषसि सबला सौरी कान्तिस्तदाहरणादिव ।
भृशमुदयते प्राचीभागे सदाद्यमहाद्भुतं
  दिशि जलपतेस्ताद्रूप्येणाऽऽगते [4]गणभास्करे ॥ ६३ ॥
द्विजपतिमहाराज्ये रात्रौ बभुः प्रभुताभृतो
  जगति सततं नक्षत्राणां गणा गगनाङ्गणे ।
महसि हसिते सौरे दूरे ययुस्तमसा समं
  प्रकृतिसमतालभ्येऽलभ्ये भवेद् भुवि साधनम् ॥ ६४ ॥
[5]गगनसरिति स्नानं चक्रे द्विजाधिपतिश्चिरं
  [6]भगणमिषतः प्रादुर्भूतास्तदम्बुनि बुद्बुदाः ।
निबिडजडिमच्छित्त्यै वेगाद् विभेजुषि वारुणी-
  मुषसि विरते तस्मिन्नेते क्रमाच्छममाययुः ॥ ६५ ॥
वसतिमिलिता लोकाः सौरे समागमनोत्सवे-
  [7]ष्वहमहमिकापूर्वं कर्त्तुं [8]वसुव्ययमुद्यताः ।
अनुनिजगृहं जग्मुः सर्वेऽधुना [9]भगणा इव
  नवरुचिघनप्रत्यासत्तिं विभाव्य च [10]गोपतेः ॥ ६६ ॥
मुदितमनसः [11]पुंनागास्ते करान् यदितस्ततो
  विदधत इहो[12]दात्ता दानाऽऽशयाः [13]कलभोत्तमाः ।
परिणतितराः केचित् [14]पोता अपि प्रयतैषिणो
  विविधरुचयः सौरस्थानोन्मुखाः प्रतिभान्त्यमी ॥ ६७ ॥
अभिजिगमिषुः सर्वो राजप्रियादिगणोऽपरां
  समुदयि महः सौरं वेगादुपस्थितमामृशन् ।
इदमनुययौ तस्यावश्यं [15]कलाधरमण्डलं
  क्षणपरिचये का वा पूर्वाऽपरागतिसङ्गतिः ॥ ६८ ॥

---

[ 62 ] 1 'हरिकरिवरः' इन्द्रहस्ती । 2 'सिन्दूराऽऽक्तम्' सिन्दूरैरार्क्तं विलेपितम् ।

[ 63 ] 3 'उषसि' प्रातःकाले । 4 'गणभास्करे' गणेषु भास्कर इव तस्मिन् ।

[ 65 ] 5 'गगनसरिति' स्वर्गङ्गायाम् । 6 'भगणमिषतः' तारागणव्याजतः ।

[ 66 ] 7 'अहमहमिकापूर्वम्' परस्परमहं शक्त इत्यस्यामहमहमिका पूर्वं यस्य तत् । 8 'वसुव्ययम्' द्रव्यव्ययम् । 9 'भगणाः' नक्षत्राणि । 10 'गोपतेः' राज्ञः ।

[ 67 ] 11 'पुंनागाः' पुरुषेषु नागा हस्तिनः । 12 'कलभोत्तमाः' कलभास्त्रिंशदब्दका गजबालास्तेषूत्तमाः । 13 'उदात्ताः' महाशयाः । 14 'पोताः' पोता दशवर्षका गजबालाः ।

[ 68 ] 15 'कलाधर॰' कलाधरश्चन्द्रः ।

हिमकणलसन्मुक्तायुक्ता इतो वरपद्मिनीः
परिधृतनवज्योतिर्वस्त्राऽऽदिदृक्षुतयोद्यताः ।
हसितवदनाम्भोजाः सौराऽऽगमे सरसीतटे
[1]मिलितललिताऽऽलीनां गानैः प्रपश्य नृपोज्ज्वलाः ॥ ६९ ॥
[2]उडुसुमनसः प्रस्तीर्णा या निःशेषनिशः कृते
गगनशयने निर्माल्यं तद्व्यपाक्रियतेऽधुना ।
पवनपुरुषैर्भूमीभागे तथैव महोत्सवे
विजयिनि कृते पौरैः सौराऽऽगमस्य [3]विसृत्वरे ॥ ७० ॥
नदति मधुरं [4]वाद्याऽऽरामः स्वरैः प्रविकस्वरै-
र्नृपसवयसां लोकानां द्राग् विबोधविलासिनाम् ।
तदनु तदनु प्रौढिं कर्त्तुं [5]स्मरध्वजमण्डलं
ध्वनति [6]मुखरीकुर्वत् सर्वं दिशामपि मण्डलम् ॥ ७१ ॥
[7]अमरसरिति प्रोत्फुल्लं यद् [8]ग्रहोत्पलकाननं
वियति तदलं सौरी दीप्तिः शुशोष सरोषणम् ।
[9]द्विजपतिरुचेर्नाशादेवं क्षितावपि वीक्ष्यतां
विषयवशतः सर्वाङ्गीनग्रहोत्पलकाननम् ॥ ७२ ॥
गगनसुभगाऽऽरामे रात्रावुडुप्रसवावली
विकसिततरा सौरीं पूजां तयेव विधित्सुना ।
[10]विबुधनिवहे नेदानीं द्रागचीयत सर्वतः
प्रभवतु भवाँस्तत्साहाय्यं विधातुमनातुरः ॥ ७३ ॥
इति नरपतिः सुप्तस्तत्रार्थिकैः प्रतिबोधितो
व्यधित सहसाऽऽदेशं देशे प्रवेशमहामहे ।
कुरुत सकलां सज्जां सद्यो[11]ऽनवद्यपताकिनी-
मभिजिगमिषुः सूरेरेवं कृताभ्युदयक्रियः ॥ ७४ ॥
तृणमिव दिवमेवं भावयन् भावशुद्ध्या
उदयनगरदेशाधीश्वरः स्वीयऋद्ध्या ।
सुरपतिरिव सूरेः सम्मुखीनश्चचाला-
चलमपि बलभाराच्चालयन्नुज्ज्वलश्रीः ॥ ७५ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकस्य उत्तराशाविजयवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

---

[ 69 ] 1 'मिलितललिताऽऽलीनाम्' मिलिताश्च ते ललिताश्चेति मिलितललितास्तासामाल्यः सख्यस्तासाम् ।
[ 70 ] 2 'उडुसुमनसः' नक्षत्रदेवाः । 3 'विसृत्वरे' प्रसारिणि ।
[ 71 ] 4 'वाद्याऽऽरामः' वाद्योद्यानम् । 5 'स्मरध्वजमण्डलम्' वादित्रसमूहम् । 6 'मुखरीकुर्वत्' वाचालीकुर्वत् ।
[ 72 ] 7 'अमरसरिति' स्वर्गङ्गायाम् । 8 'ग्रहोत्पलकाननम्' ग्रहा एवोत्पलानि कमलानि तेषां काननं वनम् । 9 'द्विजपतिरुचेः' चन्द्रकान्त्याः ।
[ 73 ] 10 'विबुधनिवहे' पण्डितसमूहे ।
[ 74 ] 11 'अनवद्यपताकिनी' निर्दोषसैन्यम् ।

## षष्ठः सर्गः ।

श्रीः ऐँ नमः श्रीपार्श्वार्हते ।

अथ चचाल विशालबले पुरो मदमलीनकटा करिणां घटा ।
घनघटेव भुवं परिसिञ्चती तरुणतारुणतान्वितबिन्दुभिः ॥ १ ॥

सकलसाध्यविधेर्वरसाधनं घनबलेऽवधिरेव गजाऽऽवली ।
पथि जनव्रजतापमपाहरत् सुकरशीकरशीतलवारिभिः ॥ २ ॥

किमिदमीयमिषात् समुपस्थिताः प्रभुसिसेविषया विषयाचलाः ।
गलदमन्दमदाम्बुविनिर्झरा न बहुधा बहुधातुविभूषिताः ॥ ३ ॥

कर-चतुष्पद-वालधि-शेपसा क्षितितलस्पृगसौ गजसंहतिः ।
सपदि दर्शनतोऽप्यभिनन्दयेन्नृपरमां परमां खलु तादृशी ॥ ४ ॥

कनक-रत्नविभूषणरश्मिभिः समभिभासितदिग्वलयाभितः ।
भृशमदीप्यत सा द्विपसन्ततिः सुखचिता खचिता शुभलक्षणैः ॥ ५ ॥

परिणता क्वचन क्वचिदुन्नता द्रुतगतिर्यदि वा स्खलिता हठात् ।
गजघटा क्वचिदम्बुधरोद्धुरस्वनवती नवतीव्रहयानुगा ॥ ६ ॥

प्रणमनाय कृतोन्नतपुष्करा कुथचलाचलरश्मितरङ्गिणी ।
गजघटा रुरुचे यमुनेव साऽऽहतरसा तरसा तटभेदने ॥ ७ ॥

रजतकिङ्किणिकारणपूरितैर्भ्रमदभ्रतरभ्रमरस्वरैः ।
द्रुतविलम्बितमेव जगाम सा घनमदा न मदाऽऽयतपृष्ठिका ॥ ८ ॥

---

[ १ ] १ 'तरुणताऽरुणतान्वितबिन्दुभिः' हस्तिनां तारुण्ये स्वेदबिन्दवोऽरुणा भवन्ति ।

[ २ ] २ 'किमिदमीयमिषात् समुपस्थिताः' गजघटाया इदमीयं यन्मिषं तस्मात् किं न समुपस्थिताः ।

[ ५ ] ३ 'सुखचिता' सुखपुष्टा । ४ 'खचिता' व्याप्ता । ३ 'शुभलक्षणैः' भद्रजातिलक्षणैः ।

[ ७ ] ५ 'कृतोन्नतपुष्करा' कृतान्युन्नतान्युदग्राणि पुष्कराणि शुण्डाया अग्रभागा यया सा 'अग्रं हस्तस्य पुष्करम्' इति हैमः [ अभि० चिं० कां० ४ श्लो० २९० ] । ६ 'कुथ°' 'कुथे वर्णः परिस्तोमः' इति हैमः [ अभि० चिं० कां० ३ श्लो० ३४४ ] 'कुथः स्यात् करिकम्बले' इत्यनेकार्थः । ७ '°तरङ्गिणी' नदी । ८ 'तरसा' शीघ्रम् ।

---

[ 1 ] 1 'मदमलीनकटा' मदः दानं तेन मलीनाऽऽविलाः कटा गण्डा यासां सा । 2 'घटा' बहूनां गजानां रचना घटा 'बहूनां घटना घटा' इति हैमः [ अभि० चिं० कां० ४ श्लो० २८९ ] 3 'घनघटा' मेघमाला ।

[ 3 ] 4 'प्रभुसिसेविषया' प्रभुं सेवितुमिच्छा सिसेविषा तया । 2 'विषयाचलाः' देशपर्वताः ।

[ 4 ] 5 'कर-चतुष्पद-वालधि-शेपसा' करः शुण्डा 'हस्तिनासा करः शुण्डा हस्तः' इति हैमः [ अभि० चिं० कां० ४ श्लो० २९० ], चतुष्पदाः चत्वारः पादाः, वालधिः पुच्छम् 'अथ पुच्छं बालहस्तो लाङ्गूलं लूम वालधिः' इति हैमः [अभि० चिं० कां० ४ श्लो० ३१०], शेपः पुंश्चिह्नं तेन प्राण्यङ्गत्वादेकवद्भावः 'अथ पुंश्चिह्नं मेहनं शेपशेपसी' इति हैमः [ अभि० चिं० कां० ३ श्लो० २७४ ] । 6 'नृपरमाम्' राजलक्ष्मीम् ।

[ 6 ] 7 'परिणता' तिर्यग्दत्तघातपरिणता 'तिर्यग्घाती परिणतो गजः' इति हैमः [ अभि० चिं० कां० ४ श्लो० २८७ ] । 8 '°उद्धुर°' उद्धुरमुन्नतम् । 9 'नवतीव्रहयानुगा' नवा नव्याः तीव्रा द्रुतगतयश्च ये हया अश्वास्ताननुगच्छतीति ।

[ 8 ] 10 'रजतकिङ्किणि°' रजतं सुवर्णं तस्य किङ्किणी क्षुद्रघण्टिका ।

तदनु काञ्चन-रत्नमयैर्युताः प्रवरपल्ययनैस्तुरगोत्तमाः ।
अनुचरैश्चतुरैरुपरक्षिता अगणना गणनायकमभ्ययुः ॥ ९ ॥
हरिक-शोण-हलाहक-पङ्गुलैर्धवल-लोहित-नीलक-पिङ्गलैः ।
प्रचलितैर्ललितैः पुरतो बभौ सचतुरं चतुरङ्गबलं हयैः ॥ १० ॥
अतिचलाचलवालधिकेशरैर्विततपक्षतयो गरुडा इव ।
कनकरश्मिधरा हरिपुङ्गवा नृपरवेः परवेगभृतो बभुः ॥ ११ ॥
जवनता विनतातनयाऽऽश्रयादुपनता ननु तार्क्ष्यवराऽऽख्यया ।
पवनतोऽप्यतिशायितयाऽचले हरिबलेऽरिबले श्लथताकरे ॥ १२ ॥
हरिपरिक्रमणे जनतामनः सजति चारुपदेषु रजोमिषात् ।
तदिव धूनयितुं चलताऽभवद्धरिपदेऽरिपदे विपदेधके ॥ १३ ॥
विदधतः किमु मण्डलमाश्रिताँश्चरणरेणुमिषात् परिमण्डलम् ।
उपदिशन्ति मनोऽणुकणान् स्म ते हयवरा यवराजिरसोत्कटाः ॥ १४ ॥
करिपरिश्रमसम्भ्रमकारिणोऽन्तिकमुपेत्य निवृत्त्य सुदूरगाः ।
विदधिरे तुरगा उरगारिवत् सनिगमे निगमे गतिविभ्रमान् ॥ १५ ॥
तुरगचक्रमवक्रतया क्वचित् क्वचन वक्रपरिक्रमविक्रमम् ।
विविधवेल्लितवल्गितकौशलादपि कलापिकलामतनोत् पथि ॥ १६ ॥
प्रतिपदं कनकोत्किरणैर्नृपः सुरपतिप्रतिमोऽभिचलन् गुरोः ।
सुभगपात्रजनं पथि नर्त्तयन् मुदमवादमवाप सहास्तिकैः ॥ १७ ॥

[ १० ] १ 'हरिक-शोण-हलाहक-पङ्गुलैः' हरिकः पीतहरितच्छायः 'हरिकः पीतहरितच्छायः स एव हालाकः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३०८ ], शोणः कोकनदच्छविः, हलाहकश्चित्रितो हयः, पङ्गुलैः सितकाचाभैः । २ 'धवल-लोहित-नीलक-पिङ्गलैः' धवलः श्वेतः, कर्कलोहितो क्रियाहः, नीलकः आनीलः पिङ्गलैः पीतरक्तैः । ३ 'सचतुरम्' हयचालनकुशलासैः सह ।

[ १४ ] ४ 'हयवरा मण्डलं विदधतः किमु मनोऽणुकणान् परिमण्डलं परिमाणं वर्तुलमुपदिशन्ति स्म' इत्युत्प्रेक्षते ।

[ १५ ] ५ 'सनिगमे' वणिक्सङ्कीर्णे । ६ 'निगमे' मार्गे ।

[ १६ ] ७ 'कलापिकलाम्' मयूरवद्गतिविशेषम् ।

[ १७ ] ८ 'अवादम्' प्रतिपक्षरहितं–अतुल्यं यथा स्यात् तथा । ९ 'सहास्तिकैः' हस्तिसमूहैः, आस्तिकैः श्राद्धैः सह वा ।

[ 9 ] 1 'प्रवरपल्ययनैः श्रेष्ठपर्याणैः 'पर्याणं तु पल्ययनम्' इति-हैमः [ अभि० चिं० कां० ४ श्लो० ३१८. ] ।

[ 11 ] 2 'अतिचलाचलवालधिकेशरैः' अतिचपलवोल्लाहैः 'वोल्लाहस्त्वयमेव स्यात् पाण्डुकेशरवालधिः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३०५ ] । 3 'विततपक्षतयः' वितता विस्तृताः पक्षतयो पक्षमूलानि येषां ते । 4 'हरिपुङ्गवाः' अश्वश्रेष्ठाः ।

[ 12 ] 5 'विनतातनयाऽऽश्रयाद्' विनतातनयः गरुडाग्रजस्तस्याश्रयात् । 'विनतासूनुररुणो गरुडाग्रजः' इति हैमः [ अभि० चिं० कां० २ श्लो० १६ ] 6 'तार्क्ष्यवराऽऽख्यया' श्रेष्ठगरुडनाम्ना । 7 'हरिबले' अश्वसैन्ये ।

[ 13 ] 8 'हरिपरिक्रमणे' अश्वगमने । 9 'सजति' 'षञ्ज सङ्गे' इति धातोः 'दशसञ्जः शवि' ४–२–४९ । इति सिद्धहैमीयसूत्रेण वर्तमानकाले रूपम् । 10 'विपदेधके' कष्टवर्धके ।

[ 15 ] 11 'उरगारिवत्' गरुडवत् 'सर्पारातिर्वज्रिजिद् वज्रतुण्डः' इति हैमः [ अभि० चिं० कां० २ श्लो० १४४ ] ।

[ 16 ] 12 'विविधवेल्लितवल्गितकौशलाद्' विविधानि वेल्लितानि लोठनानि वल्गितानि प्लुतानि च तेषां कौशलान्नैपुण्यात् । 'अपावृत्तपरावृत्तलोठनानि तु वेल्लिते'–'धोरितं वल्गितं प्लुतोत्तेरितानि च' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३११ ] ।

[ 17 ] 13 'सुरपतिप्रतिमः' इन्द्रतुल्यः । 14 'सुभगपात्रजनम्' सुभगाः शोभनाः पात्रजना नाट्येऽधिकृतपुरुषाः ।

समभिनम्य रयात् परया श्रिया क्षितिपतिर्जिनशासननायकम् ।
पुरवरेऽस्य निवेशमकारयत् सविनयं विनयन्[1] नृदरिद्रताम्[2] ॥ १८ ॥
समभिषेकविधिं निरमापयद् जिनवरे ननु विघ्नहराऽऽह्वये ।
सकलसङ्घसमक्षमयं कृपारसदृशा[3] सदृशा[4] जनरञ्जनः[5] ॥ १९ ॥
मुनिवरानिव रागजयोर्जितान् बुधपदे[1] विनिवेश्य कृतार्थयन्[2] ।
सुकृतपीवरजीववरास्तिकं द्रुतमसन्तमसं[3] भुवनेऽकरोत् ॥ २० ॥
स्मरवशीकरणाय[4] जगद्भुवामवनिजातवनीपरिजीवनम्[5] ।
मधुप[6]गीतयशा मधुरायया प्रथमतोऽथ मतो रसिकाङ्गिनाम् ॥ २१ ॥
बहुदिनान्युदगम्बुजलोचना[7] विहरतः कृशकान्तिरहर्मणिः[8] ।
हृतवसुर्ननु दक्षिणया[6] तदुत्सुकमनाः कमनादिव[9] निर्ययौ ॥ २२ ॥
हिमवतः परिशीलनयोत्तरा विरहतापमिवापचिकीर्[10] भूत् ।
अहिमरश्मिरसौ[11] नवपद्मिनीरतिकरोऽतिकरोदयदुस्सहः[12] ॥ २३ ॥
गलदमन्दपरागपिशङ्गितोऽपि[13] नवकामुकवन्[14] मधुपव्रजः[15] ।
विटपरागितयेव[16] तमस्समः कमलिनीमलिनीकरणं बभौ ॥ २४ ॥
जल-नभः-स्थलचारिवपुष्मतामनुययु[17]र्मिथुनानि[18] परस्परम् ।
कलरवैर्यतिनामपि मानसे स्मरमयं[19] रमयन्ति रसं भृशम् ॥ २५ ॥
विरहिणां सहकारमहीरुहा[20] किमपहृत्य कुलान्[21] मुकुलादिभिः[22] ।
प्रियतमाङ्कजुषां सुदृशां पिक[23]ध्वनिभृता निभृता[24] रतिराद्धे ॥ २६ ॥
हिमवतः पवनो मृदुराववौ मनसि सञ्जनयन्[25] मदमङ्गिनाम्[26] ।
कमलिनीवनसौरभसम्भृतः कमलकोमलकोश[27]विघट्टनात् ॥ २७ ॥

---

[ १८ ] १ 'विनयन्' अपनयन् स्फेटयन् । २ 'नृदरिद्रताम्' नराणां दरिद्रभावम् ।

[ १९ ] ३ 'कृपासदृशा' कृपारसदृष्ट्या । ४ 'सदृशा' तुल्यया । ५ 'जनरञ्जनः' लोकसन्तोषदः ।

[ २२ ] ६ 'हृतवसुः दक्षिणया' दक्षिणया स्त्रिया हृतवसुः सन् ।

---

[ 20 ] 1 'बुधपदे' विबुधपदव्याम् । 2 'कृतार्थयन्' उपकारयन् । 3 'असन्तमसम्' अनन्धकारमर्थाद्, अपापम् ।

[ 21 ] 4 'स्मरवशीकरणाय' स्मरः कामदेवस्तं वशीकर्त्तुम् । 5 '°वनीपरिजीवनम्' वनी भिक्षाधनमेव परिजीवनं जीविकाम् । 6 'मधुप°' मधुपो भ्रमरः ।

[ 22 ] 7 'उदगम्बुजलोचना' उदग् उदञ्चतीति उदक्कमलाक्षी । 8 'अहर्मणिः' सूर्यः । 9 'कमनाद्' पण्डितात् कामाद् वा ।

[ 23 ] 10 'अपचिकीः' दूरीकर्त्ता । 11 'अहिमरश्मिः' सूर्यः । 12 'अतिकरोदयदुस्सहः' अतिकराः बहुकिरणास्तेषामुदयेन दुस्सहोऽसह्यः ।

[ 24 ] 13 '°परागपिशङ्गितः' परागः पौष्पं रजस्तेन पिशङ्गितः पीतरक्तः कृतः । 14 'नवकामुकवत्' नवः नवीनश्चासौ कामुकोऽनुकश्चेति नवकामुकस्तेन समानः । 15 'मधुपव्रजः' भ्रमरसमूहः । 16 'विटपरागितया' विटपाः वृक्षास्तेषु रागितया । 'विटपः पुनः पल्लवेऽपि च वृक्षेषु' इति हैमः [ अने० सं० कां० ३ श्लो० ४७५ ]

[ 25 ] 17 'जल-नभः-स्थलचारिवपुष्मतां' जलचर-खेचर-स्थलचरप्राणिनाम् । 18 'मिथुनानि' द्वन्द्वानि 'स्त्रीपुंसौ द्वन्द्वं मिथुनम् च तत्' इति हैमः [ अभि० चिं० कां० ३ श्लो० २०२ ] । 19 'स्मरमयम्' कामयुक्तम् ।

[ 26 ] 20 'सहकारमहीरुहाः' आम्रवृक्षाः । 21 'कुलान्' सजातीयप्राणिनां वृन्दान् । 22 'मुकुलादिभिः' कुड्मलादिभिः । 23 'पिक°' पिकः कोकिलः । 24 'निभृता' विनीता ।

[ 27 ] 25 'सञ्जनयन्' उत्पादयन् । 26 'मदम्' आनन्द-संमोहयोः सम्भ्रमम् । 27 '°कोश°' कोशः कुड्मलः योनिश्च ।

तरुवनान्निपतत्कुसुमैः समं [1]स्मरशरैरिव मूर्त्तिधरैः क्षता ।
सविनयं प्रियमन्वनयत्[2] स्वयमनवमा नवमानवती वधूः ॥ २८ ॥
[3]अनुययौ [2]सुरभिं [3]सुरभिश्रियं विकसितां समवेक्ष्य [4]मदोद्धुरः ।
[5]परवृषं [6]विनुनुत्सुरिव क्रुधा स्थिरतरं [7]रतरञ्जनया हि[3] [8]गौः ॥ २९ ॥
[9]अनुनयन् वचनैः शुकसारिकास[10]मुदयो हृदयेश्वरपाठितः ।
विविधसन्धिविधानविचक्षणः[11] प्रिय[12]तमाऽऽयतमानमपा[13]करोत् ॥ ३० ॥
किशलयैर्व[14]लयैः स[15]रसीरुहां कनकजैर्वलयैश्च न तद्भुवाम् ।
कुवलयैर्मलयैकभुवां रसैर्न [16]कमनः कमनम्रमदं व्यधात् ॥ ३१ ॥
प्रथमतीर्थकरा[17]भिनिनंसया स विजहार गुरुर्गुरुगौरवः ।
ष(ख)ड[18]गनाद्र्युपवागडमण्डलं जनपदे न [4]पदे वि[5]पदेनसाम् ॥ ३२ ॥
समभिवन्द्य जिनप्रभुमादिमं प्रतिपदं विहरन् स जनाग्रहात् ।
अपनयन् कुनयाननयानिव नि[6]हतमोहतमो जगदातनोत् ॥ ३३ ॥
गणगुरूननुनीय महोत्सवैर्नगरशोभनया भरणांशुकैः ।
समनमद् वरवागडभूपतिरुपवने पवनेन चलाचले ॥ ३४ ॥
तमभिबोध्यगुरुवचनामृतैः कुशलकीर्त्तितकीर्त्तिरथाचलत् ।
उदयपूर्वपुरे [7]क्रममोदिताऽ[19]नुगमना गमनाय शि[20]वाऽऽगमः ॥ ३५ ॥
परिवसन्निह मासचतुष्टयीं जनगणान् जिनधर्ममबूबुधत् ।
[8]नरपतेरपि रागिणि मानसेऽ[9]विशदयं सदयं श्रुतमुद्गिरन् ॥ ३६ ॥
जनपदे विचरन् [21]शरदत्यये प्रतिपुरं किल [22]सङ्घपुरन्दरः ।
जि[23]नमतोन्नयनं क्रियया व्यधात् [10]प्रसलमांसलमाङ्गलिकार्चितः ॥ ३७ ॥

---

[ २८ ] १ 'अनवमा' प्रधाना श्रेष्ठा । 'वसन्तबलाधिक्यमिदम्' ।

[ २९ ] २ 'सुरभिम्' धेनुम् । ३ 'हि' निश्चितम्, गौः अनुययौ ।

[ ३२ ] ४ 'पदे' स्थानके । ५ 'विपदेनसाम्' आपत्पापानाम् ।

[ ३३ ] ६ 'निहतमोहतमः' निहतं निराकृतं मोहतमो यत्र तत् ।

[ ३५ ] ७ 'क्रममोदिताऽनुगमनाः' क्रमेण विहारपरिपाट्या, मोदितमनुगानां श्राद्धादीनां मनो येन सः ।

[ ३६ ] ८ 'नरपतेः मानसे' नृपमनसि । ९ 'अविशद्' प्रविवेश ।

[ ३७ ] १० 'प्रसलमांसलमाङ्गलिकार्चितः' प्रसले हेमन्ततौं मांसलानि पुष्टानि यानि माङ्गलिकानि तैरर्चितः पूजित इति ।

---

[ 28 ] 1 'स्मरशरैः' कामदेवस्य बाणैः । 2 'अन्वनयत्' रहसि प्रैरीत् ।

[ 29 ] 3 'सुरभिश्रियम्' वसन्तशोभाम् । 'वसन्त इष्यः सुरभिः' इति हैमः [ अभि० चिं० कां० २ श्लो० ७० ] । 4 'मदोद्धुरः' मदेन रेतसोद्धुर उन्नतः । 5 'परवृषम्' शत्रुवृषभम् । 6 'विनुनुत्सुः' युद्धार्थं शृङ्गाणि प्रेरयितुमिच्छुः 'णुदंत् प्रेरणे' इति धातोः सन्नन्तात् उः प्रत्ययः । 7 'रतरञ्जनया' रतं रतिस्तस्या रञ्जनया । 8 'गौः' वृषभः ।

[ 30 ] 9 'अनुनयन्' वहन् । 10 'समुदयः' समूहः । 11 'विविधसन्धिविधानविचक्षणः' विविधप्रकारेण संदेशहारकत्वादेर्न्यकरणकुशलः । 12 'प्रियतमाऽऽयतमानम्' भार्यामानविस्तारम् । 13 'अपाकरोत्' दूरीकृतम् ।

[ 31 ] 14 'वलयैः' कङ्कणैः । 15 'सरसीरुहाम्' कमलानाम् । 16 'कमनः' कामदेवः ।

[ 32 ] 17 '°अभिनिनंसया' अभिनेतुमिच्छया । 18 उपवागडमण्डलम् वागडप्रदेशं तत्समीपम् ।

[ 34 ] 19 'अनुनीय' प्रणतिं कृत्वा ।

[ 35 ] 20 'शिवाऽऽगमः' शिवः कल्याणकारी, आगम आगमनं यस्य सः ।

[ 37 ] 21 'शरदत्यये' शरत्कालव्यतीते । 22 'सङ्घपुरन्दरः' चतुर्विधसङ्घेषु पुरन्दर इन्द्रः इव श्रेष्ठः । 23 'जिनमतोन्नयनम्' जैनधर्मस्योन्नयनमुन्नतिम् ।

जिनपतिप्रतिमाभिषवद्वयोत्सवसमुद्यतभक्तजनाऽऽदरैः ।
द्रुतविलम्बितया व्यहरद् भुवि [1]गजगतिर्जगति प्रसरद्यशाः ॥ ३८ ॥
बहुविधाऽऽर्हतपूजनवन्दनाद्युचितकर्मरतैर्विरतैर्भवात् ।
समनुनीय गुरुं सदुपासकैर्निजगृहे [2]जगृहे [3]जनुषः फलम् ॥ ३९ ॥
गुरुसमागमवित्तवि[4]सर्जनैर्वि[5]दलिता [6]कलितापकलाऽखिला ।
उपनता जनता सुतपोभरैः सुकृतता कृततात्त्विकभावनैः ॥ ४० ॥
[7]बहुलवाङ्मयशोधनकर्मणाऽजनि जनेऽस्य यशोधनमद्भुतम् ।
प्रसृतमु[8]ग्रमहोदयया विभोरसुमतां सुमताश्रितधीमतः ॥ ४१ ॥
नरपतिप्रतिबोधम[9]जीजनत् समयदेशनया स नयाद् द्विधा ।
प्रभवति प्रभुवाक्यसुधारसे[10]ऽपरमते रमते स न कश्चन ॥ ४२ ॥
अपहृता प्रभुणा रुचिरैन्दवी प्रतिहतं च जनार्दनशासनम् ।
नयविशेषयुजा भृशमुज्ज्वलं भुवि हितं विहितं मतमार्हतम् ॥ ४३ ॥
नरकपालिकपालिजनादृता दृढनृशंसतया पिशिताशिता ।
समुपदेशनयैव विनाशिता विहरता हरतापसदेशिता ॥ ४४ ॥
भगवतः [11]क्रमपद्मनिवेशनाद् [12]वसुमती शुशुभे [13]घनसौरभा ।
नवनवोत्सवसम्भवतः श्रिता [15]सकमला [16]कमलाकरलीलया ॥ ४५ ॥
इति कृशानुभृशानुगतां दिशं समुपदिश्य विमोहवलस्थितिम् ।
शिथिलयन्नथ किञ्चन दुर्णयभ्रमपरामपरामगमद् गुरुः ॥ ४६ ॥
पथि समैक्षत दक्षतयाऽक्षतः [17]क्षितिपतिर्यतिनां [18]जलजाकरम् ।
प्रगुणिताद्भुतरागमिवोन्मिषत् सुजलजं [19]जलजन्तुकुलाकुलम् ॥ ४७ ॥
यवनराजभयेन यथा सुरा विषयमुग्रमहीधरमाश्रयत् ।
नवतटाकमिषाज्जलधेः स्थितिर्भुवि तथाँऽवितथा सकला बभौ ॥ ४८ ॥

---

[ ३८ ] १ 'जिनपतिप्रतिमाऽभिषवद्वय°' जिनप्रतिष्ठाद्वयम् ।

[ ४३ ] २ 'रुचिरैन्दवी' रुचिः कापालिकश्रद्धा, इन्दुस्तन्मतप्ररूपकः सोमस्तत्सम्बन्धिनीति । ३ 'जनार्दनशासनम्' लोकपीडोपदेशः कृष्णशासनं वा ।

[ ४४ ] ४ 'पिशिताशिता' मांसभोजनम् । ५ हरतापसदेशिता' हरस्येश्वरस्य मते ये तापसास्तैः कथिता ।

[ ४६ ] ६ 'कृशानुभृशानुगतां दिशम्' आग्नेयीं दिशम् ।

[ ४८ ] ७ 'अवितथा' सत्या ।

---

[ 38 ] 1 'गजगतिः' गज इव प्रशस्ता गतिर्यस्य सः ।

[ 39 ] 2 'जगृहे' प्राप । 3 'जनुषः' जन्मनः ।

[ 40 ] 4 '°विसर्जनैः' दानैः । 5 'विदलिता' विनाशिता । 6 'कलितापकला' कलिः क्लेशः कलियुगो वा तस्य तापः सन्तापस्य कला ।

[ 41 ] 7 'बहुलवाङ्मयशोधनकर्मणा' बहुलाः बहवो वाङ्मयाः सिद्धान्तग्रन्थास्तेषां शोधनं सम्पादनं तस्य कर्मणा कार्येन । 8 'उग्रमहोदयया' उग्रस्तीव्रो यो महोदयो महोन्नतिस्तया ।

[ 42 ] 9 'अजीजनत्' 'जनैचि प्रादुर्भावे' इति धातोः णिगन्ते अद्यतन्यां 'उपान्त्यस्यासमानलोपि°' ४–२–३५–इति सिद्धहेमीयसूत्रेण रूपं सिद्ध्यति । 10 'अपरमते' शैव वैष्णवाद्यन्याम्नाये ।

[ 45 ] 11 'क्रमपद्मनिवेशनात्' चरणकमलन्यासात् । 12 'वसुमती' पृथ्वी । 13 'घनसौरभा' गाढगन्धवती 'गन्धवती पृथ्वी' इति लक्षणात् । 14 'बहुसितच्छदपक्षिसुखाश्रिता' इत्यपि मूलप्रतौ पाठान्तरम् । '°सितच्छदपक्षि°' सितच्छदाः हंसाः । 15 'सकमला' कमला लक्ष्मीस्तया सहिता । 16 'कमलाऽऽकरलीलया' कमलसरःक्रीडया ।

[ 47 ] 17 'क्षितिपतिर्यतिनां' यतिनां साधूनां क्षितिपतिर्नृपतिः श्रीविजयप्रभसूरिः । 18 'जलजाऽऽकरम्' सरोवरम् । 19 'जलजन्तुकुलाऽऽकुलम्' जलजन्तूनां कूलं समूहस्तेनाऽऽकुलं व्याप्तम् ।

निशि सतारनभःप्रतिबिम्बना कृपणवद् गणयांचकृवान् मणीन् ।
जलचलत्कुमुदच्छलसम्भवद्भिमकरो मकरोऽग्रसरोऽम्बुधिः ॥ ४९ ॥
तरदनेकसितच्छदपिच्छलच्छदमिषोच्छलदुज्ज्वलचामरः ।
स्फुटरथाङ्गकुलाऽऽतपवारणः सरसभारसभाधिपतिर्व्यभात् ॥ ५० ॥
अनुतटं जलकेलिचिकीर्षया मिलितचारुविलासवतीजने ।
सपदि पाद्यविधिं विलुलत्कुशैर्नवसरोऽवसरोचितमादधे ॥ ५१ ॥
अभिपतत्तटिनीचलवीचिभिर्जनितफेनमिषाद्धसिताम्बुधिः ।
मणिगणैर्विरराज जलाशयः सललनाललनात् पतयालुभिः ॥ ५२ ॥
विततपात्रतयैव पयोधरैरनुदिशं निभृतः समुदित्वरैः ।
जलनिधेः प्रतिकर्त्तुमिवोल्लसद्रसवयाः सवयास्सजलाशयैः ॥ ५३ ॥
चलतरङ्गतुरङ्गमशालिनीरनुनयन्नृपवद् बहुवाहिनीः ।
स रुरुधे क्षितिविप्लवनोद्यतः शिखरशेखरसेतुमहीभृता ॥ ५४ ॥
वहनमुच्छ्रितलोहितकेतनं दधदयं हृदयं समरञ्जयत् ।
जयवतः क्षितिपस्य निपश्यतः प्रकृतिभिः कृतिभिर्विहितस्तुतेः ॥ ५५ ॥
जलनिमज्जनसज्जनकामिनीनयननिर्जितशालिपयोरुहः ।
सुषमयास्यसुनंदिसरोम्बरे सुरपतेरपतेज इवोच्चयौ ॥ ५६ ॥
उदयनगरलक्ष्या रम्यमादर्शरूपं पुरवरमदसीये सन्निविष्टं प्रतीरे ।
तपगणगुरुरागात् तत्र रागाविभागाद् घनतरविजयश्रीर्भूपरूपैरपीज्यः ॥ ५७ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकस्य ईशानदिग्विजयवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥



[ ५३ ] १ 'उल्लसद्रसवयाः' उल्लसन्तः रसवयसो जलपक्षिणो यत्र सः । २ 'सवयाः' जलनिधेः मित्रैः सहितः ।

[ ५७ ] ३ '°विजयश्रीः' पत्तनाचलितानामीशानदिग्विजयः । मरुदेशापेक्षयाऽऽग्नेयीविजयः ।

[ 49 ] 1 'मकरः' निधिविशेषः । 2 'अग्रसरः' प्रष्ठः ।

[ 50 ] 3 '°सितच्छद°' सितच्छदाः हंसाः । 4 'स्फुटरथाङ्गकुलाऽऽतपवारणः' स्फुटा ये रथाङ्गाश्चक्रवाकास्तेषां कुलं समूहः स एवाऽऽतपवारणं छत्रं यस्य सः । 5 'व्यभात्' विशेषेणादीदिपत् ।

[ 51 ] 6 'जलकेलिचिकीर्षया' जलक्रीडां कर्त्तुमिच्छया । 7 'पाद्यविधिम्' पादार्थं वारि पाद्यं तस्य विधिः 'पादार्थं पाद्यम्' इति हैमः [ अभि० चिं० कां० ३ श्लो० १६४ ] ।

[ 52 ] 8 'तटिनीचलवीचिभिः' तटिनी नदी तस्या चलाः चपला वीचयः कल्लोलास्तैः । 9 'पतयालुभिः' पातुकैः ।

[ 54 ] 10 '°तुरङ्गम°' तुरङ्गमा अश्वाः । 11 'वाहिनीः' सेनाः ।

[ 55 ] 12 'प्रकृतिभिः' प्रजाभिः । 13 'कृतिभिः' विद्वद्भिः ।

## सप्तमः सर्गः ।

श्रीः ऐँ नमः श्रीपार्श्वभगवतेऽर्हते ।

[1]जिनेशतीर्थे [2]समभूदमत्सरो निपीय सूरेर्वचनानि भूपतिः ।
[3]जिनेशतीर्थे [4]समभूदमत्सरो[5]ऽप्यलंचिकीर्षुः [6]प्रमनाः स [7]संवरे ॥ १ ॥
[8]समांशमास्थाय ततः क्षमाभृतां प्रभुश्चचालाचलनिश्चयाऽऽशयः ।
[9]स [10]मांसमास्थाय ततः [11]क्षमाभृतां नृपोऽपि [12]तस्यानुमतेर्न्य[13]वर्त्तत ॥ २ ॥
[14]अवेत्य [15]सासच्छदिकं पुरं [16]पुरो [17]ऽव्यधाच्चतुर्मासकमार्हतार्चितः ।
अवेत्य [18]सासच्छदिकं पुरं [19]पुरोर्जितद्विपेन्द्राननयक्षराडिव ॥ ३ ॥
स [20]शासनेनो[21]दयितो[22]ऽपरागिणां [23]महार्हतां भव्यजनानिति क्षितौ ।
शशास [24]इनेनोदयितोऽपरागिणां भवेत् प्रकाशस्त[25]मसामिव क्वचित् ॥ ४ ॥
[26]परैः [27]सतीर्थ्यैः [28]सहसाऽऽहवार्थिभिर्जनैः समं सद्व्यवहारगीर्गुरुः ।
[29]परैः स तीर्थ्यैः [30]सहसाऽऽहवार्थिभिर[31]बाध्यबोधो[32]ऽभिजगाम कामितम् ॥ ५ ॥
[33]शुभप्रवृत्तेः शमरोचितस्थितेर्महात्मनः प्रेरयिता [34]यताऽऽशयः ।
[35]शुभप्रवृत्तेः [36]समरोचितस्थितेर्गजस्य [37]सादीव बभौ जयश्रिया ॥ ६ ॥

---

[ १ ] १ 'जिनेशतीर्थे' अर्हद्धर्मे । २ 'समभूदमत्सरः' अमत्सरोऽद्विष्टोऽभूत् । किं० भूपतिः । ३ 'जिनेशतीर्थे' जिनः कृष्ण ईशो महादेवस्तयोस्तीर्थे । ४ 'समभूदमत्सरः' समा चासौ भूः समभूस्तस्यां दमो बन्धो दण्डः, समभूदम इवाचरतीति क्विपि समभूदमति शतृप्रत्यये तादृशं सरस्तटाकस्तम् । "दमः स्यात् कर्दमे दण्डे दमने दमथेऽपि च" इति हैमः [ अने० सं० कां० २ श्लो० ३२८ ] ५ 'अलंचिकीर्षुः' अलङ्कारं कर्त्तुमिच्छुः कृष्णेश्वरप्रासादयोः [ विष्णु-शिवमन्दिरयोः ] ६ 'प्रमनाः' उत्कण्ठितः, उत्सुको वा ७ 'संवरे' पाल्याम् ॥

[ २ ] ८ 'समांशमास्थाय' मासमात्रं तत्र स्थित्वा, मासे वर्षांशको भवेदिति शेषः, तुल्यमंशमैश्वर्यरूपं मत्वा वा । ९ 'सः' भूपतिः । १० 'मांसमास्थाय' मांसमाश्रित्य मांसाशनम् । ११ 'क्षमाभृतां नृपः' राज्ञां नृपो राजराजः । १२ 'तस्यानुमतेः' तस्य गुरोरनुमत्याऽऽज्ञया १३ 'न्यवर्त्तत' निवृत्तः कतिचित् प्रयाणान्यनुगत्य पश्चाद् वलितः मांसाशनं प्रत्याचख्यौ वा ।

[ ३ ] १४ 'अवेत्य' प्राप्य । १५ 'सासच्छदिकम्' 'सादडी'ति नाम्ना पुरं नगरम् । १६ 'पुरः' अग्रे परापूर्वं वा । १७ 'व्यधात्' व्यधत्त । १८ 'सासच्छदिकम्' सप्तवर्णसम्बन्धिनं गग्गुलं प्राप्य । १९ 'पुरोर्जितद्विपेन्द्राननयक्षराडिव' पुरं शरीरं तेनोर्जितो बलवान् द्विपेन्द्राननो गणपतिर्यक्षः, यक्षो [ मेघदूतस्य नायकः ] यथा चातुर्मासकं व्यधत्त तथैव । "पुरं शरीरे नगरे गुहपाटलिपुत्रयोः । पुरस्तु गुग्गुलौ पुण्ड्रं कृमौ दैत्येक्षुभेदयोः" इति हैमः [ अने० सं० कां० २ श्लो० ४५०–४५१ ] ॥

[ ४ ] २० 'शासनेन' आज्ञया । २१ 'उदयितः' उदयो जातोऽस्योदयितः । २२ 'अपरागिणाम्' रागरहितानाम् । २३ महार्हतां भव्यजनान् इति शशास । २४ 'इनस्य' स्वामिनः सूर्यस्य वा । 'उदयितोऽपरागिणाम्' या उदयिता तत्रोपद्रवकारिणां प्रकाशो न भवेत् । २५ 'तमसाम्' तिमिराणां राहूणामिव ॥

[ ५ ] २६ 'परैः' उत्कृष्टैः । २७ 'सतीर्थ्यैः' एकब्रह्मव्रताऽऽचारैः । २८ 'सहसाऽऽहवार्थिभिः' बलेनाऽऽकारणार्थिभिः जनैः समम् । २९ 'परैः तीर्थ्यैः' अन्यैस्तीर्थ्यैस्तीर्थान्तरीयैः । ३० 'सहसाऽऽहवार्थिभिः' सहसा शीघ्रं, आहवार्थिभिः रणोन्मुखैः यज्ञार्थिभिर्वा । "आहवस्तु सप्ततन्तौ स्यान्निदेशाऽऽह्वानयोरपि" इत्यनेकार्थः । ३१ 'अबाध्यबोधः' अबाध्यो बोधो यस्य सः । ३२ 'अभिजगाम कामितम्' कामितं स्थानमभिजगाम ॥

[ ६ ] ३३ 'शुभप्रवृत्तेः शमरोचितस्थितेर्महात्मनः प्रेरयिता' महात्मनः साधोः प्रेरयिता शुभप्रवृत्तेः 'शमरोचितस्थितेः' शमरोचिता स्थितिर्यस्य । ३४ 'यताऽऽशयः' यते नियमे, आशयो यस्य सः । ३५ 'शुभप्रवृत्तेः' शुभा प्रवृत्तिर्मदो यस्य । ३६ 'समरोचितस्थितेः' समरे सङ्ग्रामे उचिता स्थितिर्यस्य । ३७ 'सादी' महामात्रः ॥

स दक्षजातिप्रणयः कलाभृतां नृणामभीष्टः सुमनो मुदेऽभवत् ।
सदक्षजातिप्रणयः कलाभृतां तनुं वहन्निन्दुरिवोज्ज्वलांशुपः ॥ ७ ॥

विबोधहेतुर्जडजन्मशालिनां गवां प्रसारैः सरसां श्रियं दधौ ।
विबोधहेतुर्जलजन्मशालिनां महावनानामिव भानुमान् विभुः ॥ ८ ॥

सदा रसं सज्जनताः स्वसादरं समुन्नयन् यो जगति प्रणीतवान् ।
सदारसंसज्जनतास्वसादरं प्रतिस्थलं तं स्थलगा ववन्दिरे ॥ ९ ॥

समीहितार्थप्रथनैः स दैवतद्रुमायते स्माङ्गभृतां धियां निधिः ।
शमी हितार्थप्रथनैः सदैव तन्न कस्य लाभाय जनेऽस्य सन्निधिः ॥ १० ॥

क्रमात् समासाद्य मरोः रसामयं पुपाव भावोज्ज्वलमेदिनीपुरम् ।
क्रमात् समाऽऽशाद्यमरोरसामयं स देशसङ्घाऽऽगमभक्तिभावनैः ॥ ११ ॥

हृतव्यवायोपगतेर्विनायकः पुरे स नारायणनाम्नि तस्थिवान् ।
हृतव्यवायोऽपगतेर्विना यकन्नकोऽपि निस्तारयिता कलौ युगे ॥ १२ ॥

सुरेश्वराऽऽशाविजयाऽऽहिताऽऽशयः परं चतुर्मासककर्मणस्ततः ।
सुरेश्वराशाविजया हि तासयन्नघं स सङ्घामपुरं समीयिवान् ॥ १३ ॥

इतोऽपराऽऽशापवनाद् दिवोदितं तमो विमोहोदयजं स चिन्तयन् ।
इतोऽपराऽऽशापवनाद् "दिवो दितं" स्वतेजसा माल्यपुरं गुरुस्ततः ॥ १४ ॥

---

[ ७ ] १ 'सः' गुरुः । २ 'दक्षजातिप्रणयः' दक्षजात्यां प्रणयः स्नेहो यस्य सः । ३ 'कलाभृताम्' कला विज्ञानं तद्वताममभीष्टः । ४ 'सदक्षजातिप्रणयः' सदक्षे सद्व्यवहारे जात्या जन्मना प्रणयो याञ्चा यस्य सः, यस्य सदक्षे शिवे प्रणयमतिक्रान्तोऽतिप्रणयः न रागी । दक्षजा प्रार्वती तया सह यः स सदक्षजः शिवस्तत्र प्रणयमतिक्रान्तोऽतिप्रणयो न रागवानित्यर्थः "अक्षो रथस्यावयवे व्यवहारे बिभीतके" इति हैमः [ अने० सं० कां० श्लो० ५६९ ] । "प्रणयः प्रेमयाञ्चयोः, विस्रम्भे प्रसरे चापि" इति हैमः [ अने० सं० कां० ३ श्लो० ५२२ ] ५ 'कलाभृताम्' कलेनाजीर्णेनाभृताम् । "कलस्वं जीर्णरेतसोः, अव्यक्तमधुरध्वाने कला स्यादंशशिल्पयोः । कलने मूलरैवृद्धौ षोडशांशे विधोरपि" इति हैमः [ अने० सं० कां० २ श्लो० ४८८ ] । ६ 'उज्ज्वलांशुपः' उज्ज्वलांशून् श्वेताम्बरान् पातीति ॥

[ ८ ] ७ 'जडजन्मशालिनाम्' जडप्राणिनां पक्षे पद्मानाम् ।

[ ९ ] ८ "सदा रसं सज्जनताः स्वसादरं समुन्नयन् यः" यः सदा रसं समुन्नयन् सज्जनताः सभ्यजनसमूहान् स्वसाद् स्वाधीनान्, अरमत्यर्थं प्रणीतवान् । ९ 'सदारसंसज्जनतास्वसादरम्' सस्त्रीसभालोकेषु अनादरम् । १० 'तम्' गुरुम् ॥

[ १० ] ११ 'समीहितार्थप्रथनैः' इष्टार्थदानैः । १२ 'सः' गुरुः । १३ '°द्रुमायते स्म' कल्पवृक्षायते स्म । १४ 'शमी' शान्तः । १५ 'हितार्थप्रथनैः' हितप्रयोजनविस्तारैः ॥

[ ११ ] १६ 'क्रमात्' क्रमाभ्यां पादाभ्यामततीति क्रमात् यद्वा क्रमः परम्परागमस्तेनाततीति क्रमात् । १७ 'मरोः रसामयम्' मरोः भूमीम् । १८ 'समाऽऽशाद्यम्' सर्वदिग्भागे आद्यम् । १९ 'अरोरसामयम्' रोरा दरिद्राः सामायाः सरोगास्तैः रहितम् ॥

[ १२ ] २० 'हृतव्यवायोपगतेः' हृता नष्टा व्यवायानां विघ्नानामुपगतिस्तस्याः हेतोः । २१ 'विनायकः' गणेशः । २२ 'हृतव्यवायः' हृतः व्यवायो मैथुनं येन सः । २३ 'अपगतेः' नारकादेः । २४ 'यकन्नकोऽपि निस्तारयिता' विमानकोऽपि निस्तारयिता ॥

[ १३ ] २५ 'सुरेश्वराऽऽविजयाऽऽहिताऽऽशयः' पूर्वदिग्विजये स्थापितभावः । २६ 'सुरेश्वराऽऽशाविजया' सुरायामीश्वराऽऽशा धनवतां तृष्णा तस्या विजा पृथग्भावस्तया । २७ 'हि' निश्चितम् । २८ 'तासयन्' क्षेपयन् । २९ 'अघम्' पापम् ॥

[ १४ ] ३० 'इतोऽपराऽऽशापवनाद्' इतश्चापरस्य परपक्षस्य य आशायास्तृष्णायाः पवनो वायुस्तस्माद् । ३१ 'दिवोदितम्' दिवा दिने उदितम् । ३२ 'तमः' पापमज्ञानं वा । ३३ 'इतः' प्राप्तः । ३४ 'अपराशापवनाद्' अपराशा पश्चिमा तत्पवित्रणात् । ३५ 'दिवः' स्वर्गस्य । ३६ 'दितम्' खण्डितम् । ३७ 'स्वतेजसा' स्वप्रतापेन ॥

असौ [1]गतं [2]नाटयिता [3]सितच्छदव्रजस्य चक्रे वचनैः क्षमातलम् ।
[4]असौगतं [5]नाटयिता [6]सितच्छदप्रभुस्तथो[7]त्सूत्रपथे मनागपि ॥ १५ ॥
[8]स [9]मानवाधीश्वरसेवितक्रमाम्बुजश्चतुर्मासककर्म तेनिवान् ।
[10]समा [11]नवा [12]धीः [13]स्वरसेऽवितक्रमाऽ[14]ङ्गिनां ततोऽभूद् [15]विषयेऽर्हतां मते ॥ १६ ॥
[16]विहारशोभाऽतिशयात् [17]सभा सुरप्रभोर्यदीया [18]बहु पिप्रिये मुहुः ।
[19]विहारशोभाऽतिशयात् सभासुरः क्रमात् [20]समास्तत्र निनाय काञ्चन ॥ १७ ॥
अलं कलङ्कः सकलोऽप्यपास्यत सचेतसां दुर्णयहारिणाऽमुना ।
[21]अलं [22]कलं कः सकलोऽप्य[23]पास्यतः प्रभोर्वचो बोधयितुं नरः परः ॥ १८ ॥
[24]असन्निभोऽ[25]ङ्गप्रभया[26]ऽधिकाञ्चनश्रियं दधौ गौ[27]तमतः प्रति प्रभुः ।
[28]असन्निभोऽ[29]ङ्ग ! [30]प्रभयाऽधिकां च [31]नः प्रियां [32]समज्ञां भुवने [33]गुरोरपि ॥ १९ ॥
न [34]वासवानाम[35]नुरागिता गता [36]वसुन्धरायां स्फुरितेऽस्य [37]शासने ।
[38]नवाऽऽसवानामनुरागिता गता जनस्य नश्यत्तमसः प्रभोर्गिरा ॥ २० ॥
[39]नदीनभावातिगभीरतामसावशिश्रियद् विश्वगुरुर्गरीयसीम् ।
न दी[40]नभा [41]वाऽ[42]तिगभीर[43]तामसाऽऽशयस्य सर्वस्य मुनेर्गणे ततः ॥ २१ ॥
[44]अजन्यताऽऽपारविहारि [45]मण्डलं प्रभोर्विहारेण घनाढ्यबोधने ।
[46]अजन्यतापा [47]रविहारिमण्डलं [48]महाऽऽतपेऽ[49]प्याप्य [50]मही सुसीमगा ॥ २२ ॥
[51]न रोचिता [52]चापकलाऽ[53]सुहारिणी नृपादिलोकेऽस्य शमोपदेशनात् ।
[54]नरोचिता चाऽऽ[55]प कलाऽऽशु हारिणी तपोजपादेर्जगति प्रसारिताम् ॥ २३ ॥

---

[ १५ ] १ 'गतम्' गमनं ज्ञानं वा । २ 'नाटयिता' प्रवर्त्तकः ३ 'सितच्छदव्रजस्य' श्वेताम्बरव्रजस्य । ४ 'असौगतम्' अबौद्धम् । ५ 'नाटयिता' न, अटयिता 'स्वार्थे णिच्' । ६ 'सितच्छदप्रभुः' श्वेताम्बराधिपः । ७ 'उत्सूत्रपथे' उत्सूत्रमार्गे ॥

[ १६ ] ८ 'सः' गुरुः । ९ 'मानवाधीश्वरसेवितक्रमाम्बुजः' नृपवन्दितपादपद्मः । १० 'समा' अकुटिला । ११ 'नवा' नवीना । १२ 'धीः' मतिः । १३ 'स्वरसेऽवितक्रमा' स्वाभिप्रायेऽवितः रक्षितः क्रमः पारम्पर्यं यस्यां सा । १४ 'अङ्गिनाम्' प्राणिनाम् । १५ 'विषयेऽर्हतां मते' अर्हतां मते विषये देशे ॥

[ १७ ] १६ 'विहारशोभाऽतिशयात्' विहारा जिनप्रासादास्तेषां शोभाभरेण । १७ 'सभा सुरप्रभोः' सुरप्रभोः, इन्द्रस्य सभा । १८ 'बहु पिप्रिये' बहु यथा स्यात् तथा पिप्रिये तुष्टा १९ 'विहारशोभाऽतिशयात्' विहारे देशान्तरचलने यः शोभाया अतिशयो दुर्भिक्षडमरादिनाशस्तस्मात् । २० 'समाः' वर्षाणि ॥

[ १८ ] २१ 'अलम्' समर्थः । २२ 'कलम्' मृष्टम् । २३ 'अपास्यतः नरः पुरुषस्य परः सकलोऽपि कः बोधयितुं अलम्, इत्यन्वयः' अपि तु न कोऽपीत्यर्थः ॥

[ १९ ] २४ 'असन्निभः' अतुल्यः । २५ 'अङ्गप्रभया' देहकान्त्या । २६ 'अधिकाञ्चनश्रियम्' काञ्चनमधिकृत्याधिकाञ्चनं श्रीर्लक्ष्मीस्ताम् दधौ । २७ 'गौतमतः प्रति' गौतमतुल्यः । २८ 'असन्निभः' असद् अविद्यमानं निभं यस्मिन् सः । २९ 'अङ्ग !' अङ्ग इति संयोजने । ३० 'प्रभया' बुद्ध्या । ३१ 'नः' अस्माकम् । ३२ 'प्रियाम्' इष्टाम् । ३३ 'समाज्ञाम्' कीर्त्तिम् । ३३ 'गुरोः' देवसूरेरधिकां दधौ ॥

[ २० ] ३४ 'वासवानाम्' भूपानाम् । ३५ 'अनुरागिता' रागित्वं गता भूपाः । ३६ 'वसुन्धरायाम्' पृथ्व्याम् । ३७ 'शासने' जैनशासने तस्मिन्ननुरागिणो जाता इत्यर्थः । ३८ 'नवाऽऽसवानामनुरागिता गता' नवा नव्याऽऽसवानामादरो गतः ॥

[ २१ ] ३९ 'नदीनभावातिगभीरतामसावशिश्रियद्' नदीनः समुद्रस्तद्वद् भावे चित्ताभिप्रायेऽतिगभीरताम्, असौ, अशिश्रियत् आश्रितः । ४० 'दीनभा' दैन्यम् । ४१ 'वा' अथवा । ४२ 'अतिगभीः' अति गच्छतीत्यतिगाऽतिशायिनी भीर्भयम् । ४३ 'अतामसाऽऽशयस्य' अतामसोऽक्रोध आशयो यस्य ।

[ २२ ] ४४ 'अजन्यताऽऽपारविहारि' अपाराः बहवो विहाराश्चैत्यानि यत्रेदृग्, अजन्यत । ४५ 'मण्डलम्' देशः । ४६ 'अजन्यतापा' अतापा अजनि । ४७ 'रविहारिमण्डलम्' रवेश्चारुबिम्बम् । ४८ 'महाऽऽतपेऽपि' ग्रीष्मेऽपि । ४९ 'आप्य' प्राप्य ऋतूनामानुकूल्यात् । ५० 'मही' पृथ्वी ॥

[ २३ ] ५१ 'न रोचिता' नेष्टा । ५२ 'चापकला' धनुःकला । ५३ 'असुहारिणी' प्राणहारिणी । ५४ 'नरोचिता' नराणामुचिता । ५५ 'आप कलाऽऽशु हारिणी तपोजपादेर्जगति प्रसारिताम्' तपोजपादेस्तपोजपाद्यस्य कला घटिका, प्रसारितां विस्तारमाप, आशु शीघ्रम्, हारिणी रम्या ॥

गणेशनैपुण्यमहो महाऽऽयतेः प्रभोर्दिदीपे बहुदानवत्तया ।
गणे शनैः पुण्यमहो महायते जगत्प्रकाशाय बभूव शाश्वतम् ॥ २४ ॥
न बादरः कोऽपि निकामजागरे गणेऽभवत् तस्य गुणव्यतिक्रमः ।
न वाऽऽदरः कोपिनि कामजागरेरिता नृणां चेतसि धैर्यविक्रिया ॥ २५ ॥
न वैरपीडा न बलाभियोगिता गुरोर्विहारे मरुमण्डले ततः ।
नवैरपीडा नवलाभियोगिताहशाऽन्यतीर्थ्यैरकृशा व्यधीयत ॥ २६ ॥
नाऽऽवेशरोगोऽभिनिवेशकामना गुरोः प्रकाशेऽन्यमते तनुभृतः ।
नावे सरोगोऽभिनिवेशकामनाऽऽशयो बुधः कस्तरणेऽब्धिबन्दिरे ॥ २७ ॥
पराजितो धन्वनि योजिते गुणे प्रभोर्बली मोहमहाभटच्छली ।
पराजितो धन्वनि योजिते गुणे गुरुप्रकाण्डान्न बिभेति कः क्षितौ ॥ २८ ॥
सभाजनेऽनन्तरसस्तपालये गुणं गुरौ शासति सङ्गते प्रगे ।
स भाजनेऽनन्तरशस्तपा लये जिनेन्द्रवाचां परमानुरागिणि ॥ २९ ॥
स देशरूपं कलया च कारयन् मरौ गणी धर्मविधौ निजे पदे ।
सदेशरूपं कलयाञ्चकार यन्निवेश्य सूरिं विजयादिरत्नकम् ॥ ३० ॥
वसुन्धरा सा शुचिरस्य संगतः प्रतिस्थलं स क्षणलक्षणेक्षणैः ।
वसुं धराऽऽशासु चिरस्य संगतमबोधि बोधिप्रदमेनमार्हतः ॥ ३१ ॥

---

[ २४ ] १ 'गणेशनैपुण्यमहः' गणेशवत् पाण्डित्यस्य तेजः । २ 'महाऽऽयतेः' महती, आयतिर्विस्तृतिर्यस्य 'यतिर्विकारे विरतौ भिक्षौ' इति हैमः [ अने० सं० कां० २ श्लो० १९२ ] तेन, अमहायतेः न महद्विकारस्य । ३ 'गणे' गच्छे । ४ 'शनैः शनैर्जगत्प्रकाशाय शाश्वतं पुण्यमहर्दिनं बभूव' इत्यन्वयः । ५ 'महाऽऽयतेः' महायोत्सवायाऽऽयतिरुत्तरकालो यस्य ॥

[ २५ ] ६ 'बादरः' दृश्यमानः । ७ 'निकामजागरे' अत्यर्थं जागरूके । ८ 'गुण०' गुणाः प्राणातिपातनिवृत्त्यादयो मूलगुणाः, पिण्डविशुद्ध्यादय उत्तरगुणाः । ९ 'कोपिनि' क्रुद्धे आदरः । १० 'कामजागरेरिता' कामाज्जाता गरेण करणेनेरिता न धैर्यविक्रिया । 'गरस्तूपविषे विषे । रोगे गरं स्यात् करणे' इति हैमः [ अने० सं० कां० २ श्लो० ४२०–४२१ ] ॥

[ २६ ] ११ 'नवैरपीडा' नवैः स्तवैरपि ईडा स्तुतिः । १२ 'नवलाभियोगिताहशा' लाभोऽस्त्येषां लाभिनः, योगोऽस्त्येषां योगिनस्ततो द्वन्द्वस्तेषां भावस्तत्ता नवा चासौ लाभियोगिता तस्याः दृग् दृष्टिस्तया । गणे लाभाधिका लब्धिपात्रं योगभाजश्च बहुला दृश्यन्ते तेन श्रीपरमगुरौ मतान्तरीयाणामपि महती श्रद्धा । १३ 'अन्यतीर्थ्यैः' तापसभक्तादिभिः । १४ 'अकृशा' बहुला । १५ 'व्यधीयत' अक्रियत ॥

[ २७ ] १६ 'नाऽऽवेशरोगः' आवेशरोगोऽपस्माररुजाऽन्यमतप्रवेशरूपो रोगो वा न । १७ 'अभिनिवेशकामना' अभिनिवेशवाञ्छाऽपि हठाऽऽग्रहोऽपि न । १८ 'गुरोः प्रकाशे सत्यन्यमते' । १९ 'तनुभृतः' जीवस्य । अन्योक्तिमाह 'नावे०' अब्धिबन्दिरे तरणे नावे यानपात्राय को बुधः 'सरोगः' सरसि गच्छतीति 'अभिनिवेशो' वाहनमध्यासने कामनाऽभिलाषाऽऽशयो यस्य सः ।

[ २८ ] २० 'पराजितः' भग्नः । २१ 'धन्वनि' मरौ । २२ 'गुणे' धर्मरूपे योजिते सति प्रभोः पराजितः । २३ 'धन्वनि' धनुषि । २४ 'गुणे' ज्यायां योजिते सति । २५ 'गुरुप्रकाण्डात्' । उत्कृष्टसङ्ग्रामाद् महाबाणात् को न बिभेति । अयमपि गुरुप्रकाण्डो गुरुमुख्य इति ॥

[ २९ ] २६ 'सभाजनेऽनन्तरसः' सभाजने बहुरस आसीत् । २७ 'तपाऽऽलये' तपागणोपाश्रये । २८ 'सङ्गते' प्रातर्मिलिते । २९ 'प्रगे' अग्रं गते । ३० 'भाजने' स्थाल्यादौ । ३१ 'अनन्तरशस्तपा' अनन्तराणि सान्द्राणि शस्तानि मङ्गलानि पातीत्यनन्तरशस्तपा बहुमङ्गलान्वित इत्यर्थः । ३२ 'लये' ध्याने । सभाजने जिनेन्द्रवाचां ध्याने परमानुरागिणि ॥

[ ३० ] ३३ 'स देशरूपम्' गुरून्यायिप्रवृत्तिम् । ३४ 'कलया' विज्ञानोद्बोधनेन । ३५ 'निजे पदे' निजे पदे श्रीविजयरत्नसूरिं निवेश्य । ३६ 'सदेशरूपम्' सदा ईशरूपं पट्टनायकत्वं कलयाञ्चकार । 'ईशः स्वामिनि रुद्रे च' इति हैमः [ अने० सं० कां० २ श्लो० ५५६ ] ॥

[ ३१ ] ३७ 'वसुन्धरा सा' सा भूमिः । ३८ 'शुचिः' उज्ज्वला पवित्रा वा । ३९ 'अस्य' गुरोः संगतः । ४० 'प्रतिस्थलं स क्षणलक्षणेक्षणैः' प्रतिस्थलं सर्वत्र, क्षणलक्षणेक्षणैः महोत्सवलक्षणदर्शनैः । ४१ 'वसुम्' देवविशेषमबोधि । ४२ 'धराऽऽशासु' पर्वतदिक्षु । ४३ 'चिरस्य' बहुकालम् । ४४ 'संगतम्' मिलितम् । ४५ 'एनमार्हतः' आर्हतः श्राद्धः, एनं गुरुम् ॥

न गौतमीयं मतमक्षपादजं धिया प्रमाण्यक्रियताऽमुना मनाक् ।
न गौतमीयं मतमक्षपादजं प्रमोचितं केवलिनः प्रमोचितम् ॥ ३२ ॥
न साधुना वै भवहारिणी रुचिर्विखण्डिता नन्दितपण्डिता गणे ।
नसाधुना वैभवहारिणी रुचिर्धृता तपोभिः प्रभया समन्वितैः ॥ ३३ ॥
विमुक्करा गा नवधा सुरक्षणा जगौ गुरुर्ब्रह्मधरः क्षमापरः ।
विमुक्तरागा नवधासुरक्षणा गणे प्रवृत्तिर्व्रतिनां ततोऽभवत् ॥ ३४ ॥
प्रवासना शापनयेऽस्य मानसे गुरोर्निदेशेन रुषाऽपि योगिनाम् ।
प्रवासनाऽऽशापनयेऽस्यमानशे परिग्रहं भावयतां विदूरतः ॥ ३५ ॥
शुचिप्रभावैः श्रमणानुगामिनस्तदाऽऽहृताः पुण्यजना इवेश्वराः ।
शुचिप्रभा वैश्रमणानुगामिनप्रसादतः प्रौढिविभूतिमादधौ ॥ ३६ ॥
निरन्तरायाऽऽगमहेतुरङ्गतः शुभां रुचिं प्राप्य गुरोर्निदेशतः ।
निरन्तरा यागमहे तुरङ्गतस्तदा विहिंस्यात् सुजना न्यवीवृतन् ॥ ३७ ॥
विनाऽशनायां गजविक्रमा रते पराङ्मुखाः शुद्धदृशो न भुञ्जते ।
विनाशनायाङ्गजविक्रमारतेस्तपस्विनो यस्य गणे गणेशितुः ॥ ३८ ॥
न नाम धीरञ्जनया जिनोदिते पटुः सभा का तमुपेत्य दूरतः ।
ननाम धीरं जनयाजिनोदिते चिरं विरक्तं विपथे यथेच्छया ॥ ३९ ॥

---

[ ३२ ] १ 'अक्षपादजम्' अक्षपादो नैयायिकमतप्रणेता तस्माज्जातं श्रीगौतमीयं मतम् । २ 'गौतमीयम्' गौतमोऽत्रेन्द्रभूतिः । ३ 'क्षपादजम्' क्षपायां रात्रावत्तीति क्षपादस्तस्माज्जाते, ईदृशं न तन्मतम् । ४ 'प्रमोचितम्' मुक्तम् । ५ 'केवलिनः प्रमोचितम्' केवलज्ञानिनो ज्ञानयोग्यम् ॥

[ ३३ ] ६ 'वै भवहारिणी' वै निश्चितं साधुना भवहारिणी भवहर्त्री । ७ 'रुचिः' इच्छा । ८ 'विखण्डिता' खण्डिता न । ९ 'गणे' गच्छे । १० 'नसाऽधुना' नसा नासिकारूपेणाधुना । ११ 'वैभवहारिणी' वैभवेन हारिणी मनोहरा । १२ 'रुचिः' कान्तिः ॥

[ ३४ ] १३ 'विमुक्कराः' विमुञ्चति कर्मपाशाद् विमुग् । अतिशयेन विमुचो विमुक्कराः । १४ 'गाः' वाणीः । १५ 'नवधा सुरक्षणाः'–नवब्रह्मगुप्तिरूपा सुरक्षणा सुराणां क्षणं उत्सवा यासु ताः सुष्ठु लक्षणानि यासु ता वा । १६ 'जगौ गुरुः' गुरुर्जगौ जगाद । १७ 'नवधासुरक्षणाः' नवप्रकारा असवः प्राणास्तदाऽऽश्रयत्वात् प्राणिनस्तेषां रक्षणं यस्यां सा ॥

[ ३५ ] १८ 'प्रवासना' प्रयाणम् । १९ 'शापनये' शापस्य नये अभिप्राये । २० 'अस्य' गुरोः निदेशेन । २१ 'रुषाऽपि' रोषेणाऽपि योगिनां मानसे; न कोऽपि शशापेत्यर्थः । २२ 'प्रवासना' प्रकृष्टा वासना भावना । २३ 'आशापनये' लोभमुञ्चने । २४ 'अस्यम्' क्षेप्यं परिग्रहं भावयताम् । २५ 'आनशे' व्याप्ता । २६ 'विदूरतः' दूरतः ॥

[ ३६ ] २७ 'शुचिप्रभावैः' पवित्रतेजोभिः । २८ 'श्रमणानुगामिनः' यतिसेवकाः । २९ 'शुचिप्रभाः' निर्मलधियः । ३० 'वैश्रमणानुगाम्' धनदानुरूपाम् । ३१ 'इनप्रसादतः' स्वामिप्रसादतः ॥

[ ३७ ] ३२ 'निरन्तरायाऽऽगमहेतुरङ्गतः' अन्तरायरहितो य आगमेषु हेतुषु च रङ्गोऽस्याग्रहस्तस्मात् । ३३ 'शुभाम्' निर्दोषाम् । ३४ 'रुचिम्' इच्छाम् । ३५ 'निरन्तरा' दृढा । ३६ 'यागमहे' यज्ञोत्सवे । ३७ 'तुरङ्गतः' अश्वात् । ३८ 'विहिंस्यात्' वध्यात् । ३९ 'सुजनाः' शुद्धा लोकाः । ४० 'न्यवीवृतन्' निवृत्ताः ॥

[ ३८ ] ४१ 'विनाऽशनायाम्' अशनायां क्षुधां विना । ४२ 'गजविक्रमाः' गजवद् बलवन्तः । ४३ 'रते' भोगे पराङ्मुखाः । ४४ 'विनाशनायाङ्गजविक्रमारतेः' अङ्गजस्य स्मरस्य विक्रमा विगतक्रमा याऽरतिस्तस्या विनाशनाय ॥

[ ३९ ] ४५ 'धीरञ्जनया' बुद्धिरागेण । ४६ 'जिनोदिते' जिनवचने । ४७ 'पटुः' व्यक्ता । ४८ 'सभा' नामप्राकाश्येका सभा । ४९ 'तमुपेत्य दूरतः' दूरतः उपेत्य तं, न नाम अपि तु सर्वाऽपि ननाम । ५० 'धीरम्' प्राज्ञम् । ५१ 'जनयाजिनोदिते' जनं यजतीति जनयाजी नरमेधादियज्ञकृत् तेन नोदिते प्रेरिते । ५२ 'विरक्तम्' विरक्तं तं गुरुम् । ५३ 'विपथे' कुमार्गे ॥

सदा नवाऽऽलापिकयाचि[1]दुत्तरा वितेनिरे तां स्वगणे मिथः [2]कथाम् ।
[3]सदानबालाऽपि [4]कयाचिदुत्तरात् समं [5]यदाख्यावशतोऽनयन् निशाम् ॥ ४० ॥
अनङ्गरागं [6]नियतः [7]स मुक्तभा यः साङ्गरागः [8]सुतनो[9]स्तनौ दधौ ।
[10]अनङ्गरागं नियतः समुक्तभाः प्रोच्चैः स्तनः को न गिरिर्वनं दधत् ॥ ४१ ॥

[ एकालापकम् ]

[11]नियामकाश्चेतसि भावयन्त्यहो ! किं नाम देयोऽनु[12]वरायकः स्त्रियाः ।
[13]नियामकाश्चेतसि भावयन्त्यहोरात्रं स तीर्थङ्कर एव नः प्रभुः ॥ ४२ ॥
[14]सुखायनः [15]सारसनाभिकामितः कीदृग् रथः स्यात् सुभटो वधूजनः ।
सुखाय नः [16]सारसनाऽभिकामितः कथं जयार्थी नृपतिर्महाबलः ॥ ४३ ॥

[ एकालापकं समस्तम् ]

[17]महो दयाया [18]जगतीश्वरश्रियो [19]मा या विमोहं स्म यतोऽर्हतां मते ।
[20]महोदयायाऽऽजगतीश्वरश्रियो [21]यथास्थितं [22]भावनयाऽ[23]स्य सन्मते ! ॥४४॥ [ क्रियागुप्तम् ]
[24]पराऽसि[25]तीव्रा विरतिः [26]प्रमाऽऽपणे [27]न नाम काऽबोधि विदा तपोगणे ।
[28]पलाशितीव्राऽविरतिः [29]प्रमापणे नवाऽपि कामोचितया न भी भृता ॥ ४५ ॥

[ क्रियागुप्तम् ]

---

[ ४० ] १ 'उत्तराः' ज्ञानप्रवराः, "उत्तरं प्रवरोर्द्ध्वयोः" इति हैमः [ अने० सं० कां० ३ श्लो० ५५८ ] । २ 'कथाम्' वार्त्ताम्, मिथः सदा नित्यं नवाऽऽलापिकया वितेनिरे । ३ 'सदानबाला' दानवती बाला स्त्री । ४ "कयाचिद्' सख्या । ५ 'यदाख्यावशतः' यस्याः कथाया आख्यावशात आलापिकाकथनेन ॥

[ ४१ ] ६ 'नियतः' बद्धोऽपि । ७ 'स मुक्तभाः' स मुक्तवद् भासत इति मुक्तभाः "मुक्ता मौक्तिकपुंश्चल्योः" इति हैमः [ अने० सं० कां० २ श्लो० १९१ ] । ८ 'सुतनोः' स्त्रियाः । ९ 'तनौ' शरीरे यः साङ्गरागोऽपि अनङ्गरागं दधौ । १० 'अनङ्गरागम्' अनङ्गे आकाशे रागोऽरुणिमा यस्य तत् "अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे" इति हैमः [ अने० सं० कां० ३ श्लो० ११५ ]; "रागः स्याल्लोहितादिषु" इति हैमः [ अने० सं० कां० २ श्लो० ४६ ]; यद्वाऽनङ्गैर्मदनफलै राजत इत्यनङ्गराः, अगाः वृक्षा यस्य तत् ईदृशः स्तन इत्येकालापकम् ॥

[ ४२ ] ११ 'नियामकाः' पोतवहाः । १२ "°वरायः कः स्त्रिया देयः" देयः करः । १३ "नियामकाः" नियमधारिणः साधवः । 'तीर्थङ्कर एव नः अस्माकं प्रभुः' ॥

[ ४३ ] १४ 'सुखायनः' सुखकारि अयनं गमनं यस्य यद्वा नोऽस्माकं सर्वलोकानां सुखाय । १५ 'सारसनाभिकामितः' सारं अरैः सहितं सनाभि नाभियुक्तं कामितमभिलषितं यस्य स भटः; सारसनमधिकाङ्गमभिकामितं प्रियं यस्य स वधूजनः; राज्ञः पक्षे सारः श्रेष्ठः सनाभिस्सगोत्रः स एव कामितो यस्य सः; "नाभिः क्षेत्रप्रधानयोः, चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराजि च" इति हैमः [ अने० सं० कां० २ श्लो० ३१४ ] "सनाभिर्ज्ञातिसदृशोः" इति हैमः [ अने० सं० कां० ३ श्लो० ४८९] १६ 'सारसनाऽभिकामितः' सारं धनं तस्य सना नित्यमभिकः कामयिता तेन अमितः प्राप्तः "गत्यर्थानां प्राप्त्यर्थत्वात्" रथस्य धनवतामादराद् यद्वा सारे धने सदाऽभिकामिता लुब्धता यस्येति वधूजनः सरसैव सा रसा सा चासौ नाभिः कामिता इष्टा यस्य सः ॥

[ ४४ ] १७ 'महः' उत्सवः । १८ 'जगतीश्वरश्रियः' जगती भूमिस्तदीश्वरो भूपस्तस्य श्रियो लक्ष्म्याः । १९ 'मा या विमोहं स्म यतोऽर्हतां मते' इति पदविभागे–अर्हतां मते विमोहं मा या स्म–मा प्रापुहि; 'या' इति क्रियागुप्तं ह्यस्तन्यपि स्मसहिते वाक्ये भविष्यत्काले रूपम्–यद्वा 'मायाविमोहं स्मयतः' इति पदविभागे तु स्मयतोऽहङ्काराद् मायया कपटेन विमोहः परेषां भ्रमे पातनम् । २० 'महोदयायाऽऽजगतीश्वरश्रियः' आजगति आभुवनं, ईश्वरा समर्था श्रीः शोभा यस्य । २१ 'यथास्थितम्' परमार्थतया । २२ 'भावनया' चिन्तनया । २३ 'अस्य' क्षिपस्वेति, अस्येति क्रियागुप्तं "असूच् क्षेपणे" धातुर्दिवादिः ॥

[ ४५ ] २४ 'परा' उत्कृष्टा । २५ 'असितीव्रा' खड्गधारेवोग्रा । 'परासितीव्रा' इति पदविभागे परासि परास्ता तीव्रा इति क्रियागुप्तम् । २६ 'प्रमाऽऽपणे' ज्ञानहट्टे । २७ 'न नाम काऽबोधि विदा तपोगणे' तपोगणे विदा ज्ञानिना नाम प्राकाश्येका विरतिर्नाबोधि । बोधिविदा नरेण का अविरतिर्न परासि । २८ 'पलाशितीव्रा' मांसाशिवत् तीव्रा; "तीव्रं कटूष्णात्यर्थेषु तीव्रा तु कटुरोहिणी" इति हैमः [ अने० सं० कां० २ श्लो० ४४० ] २९ 'प्रमापणे नवापि कामोचितया न भी भृता' इति पदविभागे कामोचितया न भी भृता कन्दर्पाहंगमनस्य

